.. Amarakosha Thesaurus Chapter 3 ..

# ॥ अमरकोश एवं नामलिङ्गाऽनुशासनं खाण्ड ३ ॥

तृतीयं सामान्यकाण्डम्

।अथ विशेष्यनिघ्नवर्गः ।

(३.०.१) विशेष्य निघ्नैः संकीर्णैर् नानाऽर्थैरव्ययैरपि

(३.०.२) लिङ्गाऽऽदि संग्रहैर् वर्गाः सामान्ये वर्गसंश्रयाः

परिभाषा ।

(३.०.३) स्त्रीदाराऽऽद्यैर् यद् विशेष्यं यादृशैः प्रस्तुतं पदैः

(३.०.४) गुणद्रव्यक्रियाशब्दास् तथा स्युस् तस्य भेदकाः

(३.१.५) विशेष्यनिघ्नवर्गः

(३.१.६) क्षेमङ्करोऽरिष्टतातिशिवतातिशिवङ्करः

(३.१.७) सुकृती पुण्यवान् धन्यो महेच्छस् तु महाशयः

(३.१.८) हृदयालुः सुहृदयो महोत्साहो महोद्यमः

(३.१.९) प्रवीणे निपुणाऽभिज्ञविज्ञनिष्णातशिक्षिताः

(३.१.१०) वैज्ञानिकः कृतमुखः कृती कुशल इत्यपि

(३.१.११) पूज्यः प्रतीक्ष्यः सांशयिकः संशयापन्नमानसः

(३.१.१२) दक्षिणीयो दक्षिणार्हस् तत्र दक्षिण्य इत्यपि

(३.१.१३) स्युर् वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे

(३.१.१४) जैवातृकः स्यादायुष्मानन्तर्वाणिस् तु शास्त्रवित्

(३.१.१५) परीक्षकः कारणिको वरदस् तु समर्द्धकः

(३.१.१६) हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः

(३.१.१७) दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः

(३.१.१८) दक्षिणे सरलोदारौ सुकलो दातृभोक्तरि

(३.१.१९) तत्परे प्रसिताऽऽसक्ताविष्टार्थोद्युक्त उत्सुकः

(३.१.२०) प्रतीते प्रथितख्यातवित्त विज्ञातविश्रुताः

(३.१.२१) गुणैः प्रतीते तु कृतलक्षणाऽऽहतलक्षणौ

(३.१.२२) इभ्य आढ्यो धनी स्वामी त्वीश्वरः पतिरीशिता

(३.१.२३) अधिभूर् नायको नेता प्रभुः परिवृढोऽधिपः

(३.१.२४) अधिकर्धिः समृद्धः स्यात् कुटुम्बव्यापृतस् तु यः

(३.१.२५) स्यादभ्यागारिकस् तस्मिन्नुपाधिश् च पुमानयम्

(३.१.२६) वराङ्गरूपोपेतो यस्सिंहसंहननो हि सः

(३.१.२७) निर्वार्यः कार्यकर्ता यः संपन्नः सत्वसंपदा

(३.१.२८) अवाचि मूकोऽथ मनोजवसः पितृसंनिभः

(३.१.२९) सत्कृत्याऽलङ्कृतां कन्यां यो ददाति स कूकुदः

(३.१.३०) लक्ष्मीवान् लक्ष्मणः श्रीलः श्रीमान् स्निग्धस्तु वत्सलः

(३.१.३१) स्याद् दयालुः कारुणिकः कृपालुः सूरतस्समाः

(३.१.३२) स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः

(३.१.३३) परतन्त्रः पराधीनः परवान् नाथवानपि

(३.१.३४) अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ

(३.१.३५) खलपूः स्याद् बहुकरो दीर्घसूत्रश् चिरक्रियः

(३.१.३६) जाल्मोऽसमीक्ष्यकारी स्यात् कुण्ठो मन्दः क्रियासु यः

(३.१.३७) कर्मक्षमोऽलङ्कर्माणः क्रियावान् कर्मसूद्यतः

(३.१.३८) स कार्मः कर्मशीलो यः कर्मशूरस् तु कर्मठः

(३.१.३९) भरण्यभुक् कर्मकरः कर्मकारस् तु तत् क्रियः

(३.१.४०) अपस्नातो मृतस्नात आमिषशी तु शौष्कुलः

(३.१.४१) बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः

(३.१.४२) परान्नः परपिण्डादो भक्षको घस्मरोऽद्मरः

(३.१.४३) आद्यूनः स्यादौदरिको विजिगीषाविवर्जिते

(३.१.४४) उभौ त्वात्मम्भरिः कुक्षिम्भरिः स्वोदरपूरके

(३.१.४५) सर्वान्नीनस् तु सर्वान्नभोजी गृध्नुस्तु गर्धनः

(३.१.४६) लुब्धोऽभिलापुकस् तृष्णक् समौ लोलुपलोलुभौ

(३.१.४७) सोन्मादस् तून्मदिष्णुः स्यादविनीतः समुद्धतः

(३.१.४८) मत्ते शौण्डोत्कटक्षीबाः कामुके कमिताऽनुकः

(३.१.४९) कम्रः कामयिताऽभीकः कमनः कामनोऽभिकः

(३.१.५०) विधेयो विनयग्राही वचनेस्थित आश्रवः

(३.१.५१) वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः

(३.१.५२) धृष्टे धृष्णग् वियातश् च प्रगल्भः प्रतिभान्विते

(३.१.५३) स्यादधृष्टे तु शालीनो विलक्षो विस्मयान्विते

(३.१.५४) अधीरे कातरस् त्रस्ते भीरुभीरुकभीलुकाः

(३.१.५५) आशंसुराशंसितरि गृहयालुर् ग्रहीतरि

(३.१.५६) श्रद्धालुः श्रद्धया युक्ते पतयालुस् तु पातुके

(३.१.५७) लज्जाशीलेऽपत्रपिष्णुर् वन्दारुरभिवादके

(३.१.५८) शरारुर् घातुको हिंस्रः स्याद् वर्द्धिष्णुस् तु वर्द्धनः

(३.१.५९) उत्पतिष्णुस् तूत्पतिताऽलङ्करिष्णुस् तु मण्डनः

(३.१.६०) भूष्णुर् भ्रविष्णुर् भविता वर्तिष्णुर् वर्तनः समौ

(३.१.६१) निराकरिष्णुः क्षिप्नुः स्यात् सान्द्रस्निग्धस् तु मेदुरः

(३.१.६२) ज्ञाता तु विदुरो विन्दुर् विकासी तु विकस्वरः

(३.१.६३) विसृत्वरो विसृमरः प्रसारी च विसारिणि

(३.१.६४) सहिष्णुः सहनः क्षन्ता तितिक्षुः क्षमिता क्षमी

(३.१.६५) क्रोधनोऽमर्षणः कोपी चण्डस् त्वत्यन्तकोपनः

(३.१.६६) जागरूको जागरिता घूर्णितः प्रचलायितः

(३.१.६७) स्वप्नक् शयालुर् निद्रालुर् निद्राणशयितौ समौ

(३.१.६८) पराङ्मुखः पराचीनः स्यादवाङ्प्यधोमुखः

(३.१.६९) देवानञ्चति देवद्र्यङ् विश्वद्र्यङ् विश्वगञ्चति

(३.१.७०) यस्सहाञ्चति सध्र्यङ् स स तिर्यङ् यस्तिरोऽञ्चति

(३.१.७१) वदो वदावदो वक्ता वागीशो वाक्पतिस्समौ

(३.१.७२) वाचोयुक्तिपटुर्वाग्मी वावदूकोऽतिवक्तरि
(३.१.७३) स्याज् जल्पाकस् तु वाचालो वाचाटो बहुगर्ह्यवाक्
(३.१.७४) दुर्मुखे मुखराऽबद्धमुखौ शक्लः प्रियम्वदे
(३.१.७५) लोहलः स्यादस्फुटवाग् गर्ह्यवादी तु कद्वदः
(३.१.७६) समौ कुवादकुचरौ स्यादसौम्यस्वरोऽस्वरः
(३.१.७७) रवणः शब्दनो नान्दीवादी नान्दीकरः समौ
(३.१.७८) जडोऽज्ञ एडमूकस्तु वक्तुं श्रोतुमशिक्षिते
(३.१.७९) तूष्णींशीलस् तु तूष्णीको नग्नोऽवासा दिगम्बरे
(३.१.८०) निष्कासितोऽवकृष्टः स्यादपध्वस्तस् तु धिक्कृतः
(३.१.८१) आत्तगर्वोऽभिभूतः स्याद् दापितः साधितः समौ
(३.१.८२) प्रत्यादिष्टो निरस्तः स्यात् प्रत्याख्यातो निराकृतः
(३.१.८३) निकृतः स्याद् विप्रकृतो विप्रलब्धस् तु वञ्चितः
(३.१.८४) मनोहतः प्रतिहतः प्रतिबद्धो हतश् च सः
(३.१.८५) अधिक्षिप्तः प्रतिक्षिप्तो बद्धे कीलितसंयतौ
(३.१.८६) आपन्न आपत्प्राप्तः स्यात् कान्दिशीको भयद्रुतः
(३.१.८७) आक्षारितः क्षारितोऽभिशस्ते संकसुकोऽस्थिरे
(३.१.८८) व्यसनार्तोपरक्तौ द्वौ विहस्तव्याकुलौ समौ
(३.१.८९) विक्लवो विह्वलः स्यात् तु विवशोऽरिष्टदुष्टधीः
(३.१.९०) कश्यः कश्यार्हे सन्नद्धे त्वाततायी वधोद्यते
(३.१.९१) द्वेष्ये त्वक्षिगतो वध्यः शीर्षच्छेद्य इमौ समौ
(३.१.९२) विष्यो विषेण यो वध्यो मुसल्यो मुसलेन यः
(३.१.९३) शिश्विदानोऽकृष्णकर्मा चपलश् चिकुरः समौ
(३.१.९४) दोषैकदृक् पुरोभागी निकृतस् त्वनृजुः शठः
(३.१.९५) कर्णेजपः सूचकः स्यात् पिशुनो दुर्जनः खलः
(३.१.९६) नृशंसो घातुकः क्रूरः पापो धूर्तस् तु वञ्चकः
(३.१.९७) अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः
(३.१.९८) कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः
(३.१.९९) निःस्वस् तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः
(३.१.१००) वनीयको याचनको मार्गणो याचकाऽर्थिनौ
(३.१.१०१) अहङ्कारवानहंयुः शुभंयुस् तु शुभान्वितः
(३.१.१०२) दिव्योपपादुका देवा नृगवाऽऽद्या जरायुजाः
(३.१.१०३) स्वेदजाः कृमिदंशाऽऽद्याः पक्षिसर्पाऽऽदयोऽण्डजाः ।
इति प्राणिवर्गः अत्र मूलश्लोकाः ५० ॥
(३.१.१०४) उद्भिदस् तरुगुल्माऽऽद्या उद्भिदुद्भिज्जमुद्भिदम्
(३.१.१०५) सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्
(३.१.१०६) कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम्
(३.१.१०७) रम्यं मनोहरं सौम्यं भद्रकं रमणीयकम्
(३.१.१०८) तदासेचनकं तृप्तेर् नास्त्यन्तो यस्य दर्शनात्
(३.१.१०९) अभीष्टेऽभीप्सितं हृद्यं दयितं वल्लभं प्रियम्
(३.१.११०) निकृष्टप्रतिकृष्टाऽर्वरेफयाप्याऽवमाऽधमाः
(३.१.१११) कुपूयकुत्सिताऽवद्यखेटगर्ह्याऽणकाः समाः
(३.१.११२) मलीमसं तु मलिनं कच्चरं मलदूषितम्
(३.१.११३) पूतं पवित्रं मेध्यं च वीध्रं तु विमलाऽर्थकम्
(३.१.११४) निर्णिक्तं शोधितं मृष्टं निःशोध्यमनवस्करम्
(३.१.११५) असारं फल्गु शून्यं तु वशिकं तुच्छरिक्तके
(३.१.११६) क्लीबे प्रधानं प्रमुखप्रवेकाऽनुत्तमोत्तमाः
(३.१.११७) मुख्यवर्यवरेण्याश् च प्रवर्होऽनवरार्ध्यवत्
(३.१.११८) परार्ध्याऽग्रप्राग्रहरप्राग्र्याऽग्र्याऽग्रीयमग्रियम्
(३.१.११९) श्रेयान् श्रेष्ठः पुष्कलः स्यात् सत्तमश् चाऽतिशोभने
(३.१.१२०) स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः
(३.१.१२१) सिंहशार्दूलनागाऽऽद्याः पुंसि श्रेष्ठाऽर्थगोचराः
(३.१.१२२) अप्राग्र्यं द्वयहीने द्वे अप्रधानोपसर्जने
(३.१.१२३) विशंकटं पृथु बृहद् विशालं पृथुलं महत्
(३.१.१२४) वड्रोरुविपुलं पीनपीव्नी तु स्थूलपीवरे
(३.१.१२५) स्तोकाऽल्पक्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु
(३.१.१२६) स्त्रियां मात्रा त्रुटिः पुंसि लवलेशकणाऽणवः
(३.१.१२७) अत्यल्पेऽल्पिष्ठमल्पीयः कनीयोऽणीय इत्यपि
(३.१.१२८) प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु
(३.१.१२९) पुरुहूः पुरु भूयिष्ठं स्फारं भूयश च भूरि च
(३.१.१३०) परः शताऽऽद्यास् ते येषां परा संख्या शताऽऽदिकात्
(३.१.१३१) गणनीये तु गणेयं संख्याते गणितमथ समं सर्वम्
(३.१.१३२) विश्वमशेषं कृत्स्नं समस्तनिखिलाऽखिलानि निःशेषम्
(३.१.१३३) समग्रं सकलं पूर्णमखण्डं स्यादनूनके
(३.१.१३४) घनं निरन्तरं सान्द्रं पेलवं विरलं तनु
(३.१.१३५) समीपे निकटाऽऽसन्नसंनिकृष्टसनीडवत्
(३.१.१३६) सदेशाऽभ्याशसविधसमर्यादसवेशवत्
(३.१.१३७) उपकण्ठाऽन्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम्
(३.१.१३८) संसक्ते त्वव्यवहितमपदान्तरमित्यपि
(३.१.१३९) नेदिष्ठमन्तिकतमं स्याद् दूरं विप्रकृष्टकम्
(३.१.१४०) दवीयश् च दविष्ठं च सुदूरं दीर्घमायतम्
(३.१.१४१) वर्तुलं निस्तलं वृत्तं बन्धुरं तून्नतानतम्
(३.१.१४२) उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने
(३.१.१४३) न्यङ्नीचखर्वह्रस्वाः स्युरवाग्रेऽवनताऽऽनतम्
(३.१.१४४) अरालं वृजिनं जिह्ममूर्मिमत् कुञ्चितं नतम्
(३.१.१४५) आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि
(३.१.१४६) ऋजावजिह्मप्रगुणौ व्यस्ते त्वप्रगुणाऽऽकुलौ
(३.१.१४७) शाश्वतस् तु ध्रुवो नित्यसदातनसनातनाः
(३.१.१४८) स्थास्नुः स्थिरतरः स्थेयानेकरूपतया तु यः
(३.१.१४९) कालव्यापी स कूटस्थः स्थावरो जङ्गमेतरः
(३.१.१५०) चरिष्णु जङ्गमचरं त्रसमिङ्गं चराचरम्
(३.१.१५१) चलनं कम्पनं कम्प्रं चलम् लोलं चलाचलम्
(३.१.१५२) चञ्चलं तरलं चैव पारिप्लवपरिप्लवे
(३.१.१५३) अतिरिक्तः समधिको धृढसंधिस् तु संहतः
(३.१.१५४) खक्खटं कठिनं क्रूरं कठोरं निष्ठुरं धृढम्
(३.१.१५५) जरठं मूर्तिमन् मूर्तं प्रवृद्धं प्रौढमेधितम्
(३.१.१५६) पुराणे प्रतनप्रत्नपुरातनचिरन्तनाः

(३.१.१५७) प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः
(३.१.१५८) नूत्नश् च सुकुमारं तु कोमलं मृदुलम् मृदु
(३.१.१५९) अन्वगन्वक्षमनुगेऽनुपदं क्लीबमव्ययम्
(३.१.१६०) प्रत्यक्षं स्यादैन्द्रियकमप्रत्यक्षमतीन्द्रियम्
(३.१.१६१) एकतानोऽनन्यवृत्तिरैकाग्रैकायनावपि
(३.१.१६२) अप्येकसर्ग एकाग्र्योऽप्येकायनगतोऽपि सः
(३.१.१६३) पुंस्यादिः पूर्वपौरस्त्यप्रथमाऽऽद्या अथाऽस्त्रियाम्
(३.१.१६४) अन्तो जघन्यं चरममन्त्यपाश्चात्यपश्चिमाः
(३.१.१६५) मोघं निरर्थकं स्पष्टं स्फुटं प्रव्यक्तमुल्बणम्
(३.१.१६६) साधारणं तु सामान्यमेकाकी त्वेक एककः
(३.१.१६७) भिन्नाऽर्थका अन्यतर एकं त्वोऽन्येतरावपि
(३.१.१६८) उच्चावचं नैकभेदमुच्चण्डमविलम्बितम्
(३.१.१६९) अरुन्तुदस् तु मर्मस्पृगबाधं तु निरर्गलम्
(३.१.१७०) प्रसव्यं प्रतिकूलं स्यादपसव्यमपष्ठु च
(३.१.१७१) वामं शरीरे सव्यं स्यादपसव्यं तु दक्षिणम्
(३.१.१७२) सङ्कटम् ना तु संबाधः कलिलं गहनं समे
(३.१.१७३) संकीर्णे संकुलाऽऽकीर्णे मुण्डितं परिवापितम्
(३.१.१७४) ग्रन्थितं संदितं दृब्धं विसृतं विस्तृतं ततम्
(३.१.१७५) अन्तर्गतं विस्मृतं स्यात् प्रआप्तप्रणिहिते समे
(३.१.१७६) वेल्लितप्रेङ्खिताऽऽधूतचलिताऽऽकम्पिता धुते
(३.१.१७७) नुत्तनुन्नाऽस्तनिष्ठयूताऽऽविद्धक्षिप्तेरिताः समाः
(३.१.१७८) परिक्षिप्तं तु निवृत्तं मूषितं मुषिताऽर्थकम्
(३.१.१७९) प्रवृद्धप्रसृते न्यस्तनिसृष्टे गुणिताऽऽहते
(३.१.१८०) निदिग्धोपचिते गूढगुप्ते गुण्ठितरूषिते
(३.१.१८१) द्रुताऽवदीर्णे उद्गूर्णोद्यते काचितशिक्यिते
(३.१.१८२) घ्राणघ्राते दिग्धलिप्ते समुदक्तोद्धृते समे
(३.१.१८३) वेष्टितं स्याद् वलयितं संवीतं रुद्धमावृतम्
(३.१.१८४) रुग्णं भुग्नेऽथ निशितक्ष्णुतशातानितेजिते
(३.१.१८५) स्याद् विनाशोन्मुखं पक्वं ह्रीणह्रीतौ तु लज्जिते
(३.१.१८६) वृत्ते तु वृतव्यावृत्तौ संयोजित उपाहितः
(३.१.१८७) प्राप्यं गम्यं समासाद्यं स्यन्नं रीणं स्नुतं स्रुतम्
(३.१.१८८) संगूढः स्यात् संकलितोऽवगीतः ख्यातगर्हणः
(३.१.१८९) विविधः स्याद् बहुविधो नानारूपः पृथग्विधः
(३.१.१९०) अवरीणो धिक्कृतश् चाप्यवध्वस्तोऽवचूर्णितः
(३.१.१९१) अनायासकृतं फाण्टं स्वनितं ध्वनितम् समे
(३.१.१९२) बद्धे संदानितं मूतमुद्दितं संदितं सितम्
(३.१.१९३) निष्पक्वे क्वथितं पाके क्षीराऽऽज्य हविषां शृतम्
(३.१.१९४) निर्वाणो मुनिवह्न्याऽऽदौ निर्वातस् तु गतेऽनिले
(३.१.१९५) पक्वम् परिणते गूनं हन्ने मीढं तु मूत्रिते
(३.१.१९६) पुष्टे तु पुषितं सोढे क्षान्तमुद्वान्तमुद्गते
(३.१.१९७) दान्तस् तु दमिते शान्तः शमिते प्रार्थितेऽर्दितः
(३.१.१९८) ज्ञप्तस् तु ग्यपिते छन्नश् छादिते पूजितेऽञ्चितः
(३.१.१९९) पूर्णस् तु पूरिते क्लिष्टः क्लिशितेऽवसिते सितः
(३.१.२००) प्रुष्टप्लुष्टोषिता दग्धे तष्टत्वष्टौ तनूकृते
(३.१.२०१) वेधितच्छिद्रितौ विद्धे विन्नवित्तौ विचारिते
(३.१.२०२) निष्प्रभे विगताऽरोकौ विलीने विद्रुतद्रुतौ
(३.१.२०३) सिद्धे निर्वृत्तनिष्पन्नौ दारिते भिन्नभेदितौ
(३.१.२०४) ऊतं स्यूतमुतं चेति त्रितयं तन्तु सन्तते
(३.१.२०५) स्यादर्हिते नमस्यितनमसितमपचायिताऽर्चिताऽपचितम्
(३.१.२०६) वरिवसिते वरिवस्यितमुपासितं चोपचरितं च
(३.१.२०७) संतापितसंतप्तौ धूपित धूपायितौ च दूनश् च
(३.१.२०८) हृष्टो मत्तस् तृप्तः प्रह्लन्नः प्रमुदितः प्रीतः
(३.१.२०९) छिन्नं छातं लूनं कृत्तं दातं दितं छितं वृक्णम्
(३.१.२१०) स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम्
(३.१.२११) लब्धं प्राप्तं विन्नं भावितमासादितं च भूतम् च
(३.१.२१२) अन्वेषितं गवेषितमन्विष्टं मार्गितं मृगितम्
(३.१.२१३) आर्द्रं सार्द्रं क्लिन्नं तिमितं स्मिमितं समुन्नमुत्तं च
(३.१.२१४) त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च
(३.१.२१५) अवगणितमवमताऽवज्ञाते अवमानितं च परिभूते
(३.१.२१६) त्यक्तं हीनं विधुतं समुज्झितं धूतमुत्सृष्टे
(३.१.२१७) उक्तं भाषितमुदितं जल्पितमाख्यातमभिहितं लपितम्
(३.१.२१८) बुद्धं बुधितं मनितं विदितं प्रतिपन्नमवसिताऽवगते
(३.१.२१९) उरीकृतमुररीकृतमङ्गीकृतमाश्रुतं प्रतिज्ञातम्
(३.१.२२०) संगीर्णविदितसंश्रुतसमाहितोपश्रुतोपगतम्
(३.१.२२१) ईलितशस्तपणायितपनायितप्रणुतपणितपनितानि
(३.१.२२२) अपि गीर्णवर्णिताऽभिष्टुतेडितानि स्तुताऽर्थानि
(३.१.२२३) भक्षितचर्वितलिप्तप्रत्यवसितगिलितखादितप्सातम्
(३.१.२२४) अभ्यवहृताऽन्नजग्धग्रस्तग्लस्ताऽशितं भुक्ते
(३.१.२२५) क्षेपिष्ठक्षोदिष्ठप्रेष्ठवरिष्ठस्थविष्ठबंहिष्ठाः
(३.१.२२६) क्षिप्रक्षुद्राऽभीप्सितपृथुपीवरबहुलप्रकर्षाऽर्थाः
(३.१.२२७) साधिष्ठद्राघिष्ठस्फेष्ठगरिष्ठह्रसिष्ठवृन्दिष्ठाः
(३.१.२२८) बाढव्यायतबहुगुरुवामनवृन्दारकाऽतिशये

संकीर्णवर्गः ।

(३.२.२२९) प्रकृतिप्रत्ययाऽर्थाऽऽद्यैः संकीर्णे लिङ्गमुन्नयेत्

। अथ संकीर्णवर्गः

(३.२.२३०) कर्म क्रिया तत्सातत्ये गम्ये स्युरपरस्पराः
(३.२.२३१) साकल्याऽऽसंगवचने पारायणपरायणे
(३.२.२३२) यदृच्छा स्वैरिता हेतुशून्या त्वास्था विलक्षणम्
(३.२.२३३) शमथस् तु शमः शान्तिर् दान्तिस् तु दमथो दमः
(३.२.२३४) अवदानं कर्म वृत्तं काम्यदानं प्रवारणम्
(३.२.२३५) वशक्रिया संवननं मूलकर्म तु कार्मणम्
(३.२.२३६) विधूननं विधुवनं तर्पणं प्रीणनाऽवनम्
(३.२.२३७) पर्याप्तिः स्यात् परित्राणं हस्तधारणमित्यपि
(३.२.२३८) सेवनं सीवनं स्यूतिर् विदरः स्फुटनं भिदा
(३.२.२३९) आक्रोशनमभीषङ्गः संवेदो वेदना न ना
(३.२.२४०) संमूर्च्छनमभिव्याप्तिर् याञ्चा भिक्षाऽर्थनाऽर्दना

(३.२.२४१) वर्धनं छेदनेऽथ द्वे आनन्दनसभाजने
(३.२.२४२) आप्रच्छन्नमथाऽऽम्नायः संप्रदायः क्षये क्षिया
(३.२.२४३) ग्रहे ग्राहो वशः कान्तौ रक्षणस् त्राणे रणः कणे
(३.२.२४४) व्यधो वेधे पचा पाके हवो हूतौ वरो वृत्तौ
(३.२.२४५) ओषः प्लोषे नयो नाये ज्यानिर् जीर्णौ भ्रमो भ्रमौ
(३.२.२४६) स्फातिर् वृद्धौ प्रथा ख्यातौ स्पृष्टिः पृक्तौ स्नवः स्रवे
(३.२.२४७) एधा समृद्धौ स्फुरणे स्फुरणा प्रमितौ प्रमा
(३.२.२४८) प्रसूतिः प्रसवे श्च्योते प्राधारः क्लमथः क्लमे
(३.२.२४९) उत्कर्षोऽतिशये संधिः श्लेषे विषय आश्रये
(३.२.२५०) क्षिपायां क्षेपणं गीर्णिर् गिरौ गुरणमुद्यमे
(३.२.२५१) उन्नाय उन्नये श्रायः श्रयणे जयने जयः
(३.२.२५२) निगादो निगदे मादो मद उद्वेग उद्भ्रमे
(३.२.२५३) विमर्दनं परिमलोऽभ्युपपत्तिरनुग्रहः
(३.२.२५४) निग्रहस् तद्विरुद्धः स्यादभियोगस् त्वभिग्रहः
(३.२.२५५) मुष्टिबन्धस् तु संग्राहो डिम्बे डमरविप्लवौ
(३.२.२५६) बन्धनं प्रसितिश् चारः स्पर्शः स्प्रष्टोपतप्तरि
(३.२.२५७) निकारो विप्रकारः स्यादाकारस् त्विङ्ग इङ्गितम्
(३.२.२५८) परिणामो विकारे द्वे समे विकृतिविक्रिये
(३.२.२५९) अपहारस् त्वपचयः समाहारः समुच्चयः
(३.२.२६०) प्रत्याहार उपादानं विहारस् तु परिक्रमः
(३.२.२६१) अभिहारोऽभिग्रहणं निहारोऽभ्यवकर्षणम्
(३.२.२६२) अनुहारोऽनुकारः स्यादर्थस्याऽपगमे व्ययः
(३.२.२६३) प्रवाहस् तु प्रवृत्तिः स्यात् प्रवहो गमनं बहिः
(३.२.२६४) वियामो वियमो यामो यमः संयामसंयमौ
(३.२.२६५) हिम्साकर्माऽभिचारः स्याज् जागर्या जागरा द्वयोः
(३.२.२६६) विघ्नोऽन्तरायः प्रत्यूहः स्यादुपघ्नोऽन्तिकाश्रये
(३.२.२६७) निर्वेश उपभोगः स्यात् परिसर्पः परिक्रिया
(३.२.२६८) विधुरं तु प्रविश्लेषेऽभिप्रायश् छन्द आशयः
(३.२.२६९) संक्षेपणं समसनं पर्यवस्था विरोधनम्
(३.२.२७०) परिसर्या परीसारः स्यादास्या त्वासना स्थितिः
(३.२.२७१) विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः
(३.२.२७२) संवाहनं मर्दनं स्याद् विनाशः स्याददर्शनम्
(३.२.२७३) संस्तवः स्यात् परिचयः प्रसरस् तु विसर्पणम्
(३.२.२७४) नीवाकस् तु प्रयामः स्यात् संनिधिः संनिकर्षणम्
(३.२.२७५) लवोऽभिलाषो लवने निष्पावः पवने पवः
(३.२.२७६) प्रस्तावः स्यादपसरस् त्रसरः सूत्रवेष्टनम्
(३.२.२७७) प्रजनः स्यादुपसरः प्रश्रयप्रणयौ समौ
(३.२.२७८) धीशक्तिर् निष्क्रमोऽस्त्री तु संक्रमो दुर्गसंचरः
(३.२.२७९) प्रत्युत्क्रमः प्रयोगाऽर्थः प्रक्रमः स्यादुपक्रमः
(३.२.२८०) स्यादभ्यादानमुद्धात आरम्भः संभ्रमस् त्वरा
(३.२.२८१) प्रतिबन्धः प्रविष्टम्भोऽवनायस् तु निपातनम्
(३.२.२८२) उपलम्भस् त्वनुभवः समालम्भो विलेपनम्
(३.२.२८३) विप्रलम्भो विप्रयोगो विलम्भस् त्वतिसर्जनम्
(३.२.२८४) विश्रावस् तु प्रतिख्यातिरवेक्षा प्रतिजागरः
(३.२.२८५) निपाठनिपठौ पाठे तेमस्तेमौ समुन्दने
(३.२.२८६) आदीनवाऽऽस्रवौ क्लेशे मेलके संगसंगमौ
(३.२.२८७) संवीक्षनं विचयनं मार्गणं मृगणा मृगः
(३.२.२८८) परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्
(३.२.२८९) निर्वर्णनं तु निध्यानं दर्शनाऽऽलोकनेक्षणम्
(३.२.२९०) प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः
(३.२.२९१) उपशायो विशायश् च पर्यायशयनाऽर्थकौ
(३.२.२९२) अर्तनं च ऋतीया च हृणीया च घृणाऽर्थकाः
(३.२.२९३) स्याद् व्यत्यासो विपर्यासो व्यत्ययश् च विपर्यये
(३.२.२९४) पर्ययोऽतिक्रमस् तस्मिन्नतिपात उपात्ययः
(३.२.२९५) प्रेषणं यत् समाहूय तत्र स्यात् प्रतिशासनम्
(३.२.२९६) स संस्तावः क्रतुषु या स्तुतिभूमिर् द्विजन्मनाम्
(३.२.२९७) निधाय तक्ष्यते यत्र काष्ठे काष्ठं स उद्घनः
(३.२.२९८) स्तम्बघ्नस् तु स्तम्बघनः स्तम्बो येन निहन्यते
(३.२.२९९) आविधो विध्यते येन तत्र विष्वक्समे निघः
(३.२.३००) उत्कारश् च निकारश् च द्वौ धान्योत्क्षेपणाऽर्थकौ
(३.२.३०१) निगारोद्गारविक्षावोद्ग्राहास् तु गरणाऽऽदिषु
(३.२.३०२) आरत्यवरतिविरतय उपरामेऽथाऽस्त्रियां तु निष्ठेवः
(३.२.३०३) निष्ठयूतिर् निष्ठेवननिष्ठीवनमित्यभिन्नानि
(३.२.३०४) जवने जूतिः सातिस् त्ववसाने स्यादथ ज्वरे जूर्तिः
(३.२.३०५) उदजस् तु पशु प्रेरणमकरणिरित्याऽऽदयः शापे
(३.२.३०६) गोत्राऽन्तेभ्यस् तस्य वृन्दमित्यौपगवकाऽऽदिकम्
(३.२.३०७) आपूपिकं शाष्कुलिकमेवमाद्यमचेतसाम्
(३.२.३०८) माणवानां तु माणव्यं सहायानां सहायता
(३.२.३०९) हल्या हलानां ब्राह्मण्यवाडव्ये तु द्विजन्मनाम्
(३.२.३१०) द्वे पर्शुकानां पृष्ठानां पार्श्वं पृष्ठ्यमनुक्रमात्
(३.२.३११) खलानां खलिनी खल्याऽप्यथ मानुष्यकं नृणाम्
(३.२.३१२) ग्रामता जनता धूम्या पाश्या गल्या पृथक्पृथक्
(३.२.३१३) अपि साहस्रकारीषवार्मणाऽऽथर्वणाऽऽदिकम् ।

इति संकीर्णवर्गः २ अत्र मूलश्लोकाः ४२

## नानार्थवर्गः

(३.३.३१४) नानाऽर्थाः केऽपि कान्ताऽऽदि वर्गेष्वेवाऽत्र कीर्तिताः
। अथ नानार्थवर्गः
(३.३.३१५) भूरिप्रयोगा ये येषु पर्यायेष्वपि तेषु ते
(३.३.३१६) आकाशे त्रिदिवे नाको लोकस् तु भुवने जने
(३.३.३१७) पद्ये यशसि च श्लोकः शरे खड्गे च सायकः
(३.३.३१८) जम्बुकौ क्रोष्टुवरुणौ पृथुकौ चिपिटाऽर्भकौ
(३.३.३१९) आलोकौ दर्शनद्योतौ भेरीपटकमानकौ
(३.३.३२०) उत्सङ्गचिह्नयोरङ्कः कलङ्कोऽङ्काऽपवादयोः
(३.३.३२१) तक्षको नागवर्द्धक्योरर्कः स्फटिकसूर्ययोः
(३.३.३२२) मरुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोः

(३.३.३२३) स्यात् पुलाकस् तुच्छधान्ये संक्षेपे भक्तसिक्थके
(३.३.३२४) उलूके करिणः पुच्छमूलोपान्ते च पेचकः
(३.३.३२५) कमण्डलौ च करकः सुगते च विनायकः
(३.३.३२६) किष्कुर् हस्ते वितस्तौ च शूककीटे च वृश्चिकः
(३.३.३२७) प्रतिकूले प्रतीकस् त्रिष्वेकदेशे तु पुंस्ययम्
(३.३.३२८) स्याद् भूतिकं तु भूनिम्बे कत्तृणे भूस्तृणेऽपि च
(३.३.३२९) ज्योत्स्निकायां च घोषे च कोशातक्यथ कट्फले
(३.३.३३०) सिते च खदिरे सोमवल्कः स्यादथ सिह्लके
(३.३.३३१) तिलकल्के च पिण्याको बाह्लीकं रामठेऽपि च
(३.३.३३२) महेन्द्र गुग्गुलूलूकव्यालग्राहिषु कौशिकः
(३.३.३३३) रुक्तापशङ्कास्वातङ्कः स्वल्पेऽपि क्षुल्लकस् त्रिषु
(३.३.३३४) जैवातृकः शशाङ्केऽपि खुरेऽप्यश्वस्य वर्तकः
(३.३.३३५) व्याघ्रेऽपि पुण्डरीको ना यवान्यामपि दीपकः
(३.३.३३६) शालावृकाः कपिक्रोष्टुश्वानः स्वर्णेऽपि गैरिकम्
(३.३.३३७) पीडाऽर्थेऽपि व्यलीकं स्यादलीकं त्वप्रियेऽनृते
(३.३.३३८) शीलाऽन्वयावनूके द्वे शल्के शकलवल्कले
(३.३.३३९) साऽष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले
(३.३.३४०) दीनारेऽपि च निष्कोऽस्त्री कल्कोऽस्त्री शमलैनसोः
(३.३.३४१) दम्भेऽप्यथ पिनाकोऽस्त्री शूलशङ्करधन्वनोः
(३.३.३४२) धेनुका तु करेण्वां च मेघजाले च कालिका
(३.३.३४३) कारिका यातनावृत्त्योः कर्णिका कर्णभूषणे
(३.३.३४४) करिहस्तेऽङ्गुलौ पद्मबीजकोश्यां त्रिषूत्तरे
(३.३.३४५) वृन्दारकौ रूपिमुख्यावेके मुख्याऽन्यकेवलाः
(३.३.३४६) स्याद् दाम्भिकः कौक्कुटिको यश् चाऽदूरेरितेक्षणः
(३.३.३४७) ललाटिकः प्रभोर् भालदर्शी कार्याऽक्षमश्
(३.३.३४८) ् च यः
(३.३.३४९) भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम्
(३.३.३५०) सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः
(३.३.३५१) पाकौ पक्तिशिशू मध्यरत्ने नेतरि नायकः
(३.३.३५२) पर्यङ्कः स्यात् परिकरे स्याद् व्याग्रेऽपि च लुब्धकः
(३.३.३५३) पेटकस् त्रिषु वृन्देऽपि गुरौ देश्ये च देशिकः
(३.३.३५४) खेटकौ ग्रामफलकौ धीवरेऽपिच जालिकः
(३.३.३५५) पुष्परेणौ च किञ्जल्कः शुल्कोऽस्त्री स्त्रीधनेऽपि च
(३.३.३५६) स्यात् कल्लोलेऽप्युत्कलिका वार्धकं भाववृन्दयोः
(३.३.३५७) करिण्यां चापि गणिका दारकौ बालभेदकौ
(३.३.३५८) अन्धेऽप्यनेडमूकः स्यात् टङ्कौ दर्पाऽश्मदारणौ
(३.३.३५९) मृद्भाण्डेऽप्युष्ट्रिका मन्थे खजकं रसदर्वके
(३.३.३६०) इति कान्ताः
(३.३.३६१) मयूखस् त्विट्करज्वालास्वलिबाणौ शिलीमुखौ
(३.३.३६२) शङ्खो निधौ ललटाऽस्थ्निकम्बौ न स्त्रीन्द्रियेऽपि खम्
(३.३.३६३) धृणिज्वाले अपि शिखे शैलवृक्षौ नगावगौ
(३.३.३६४) इति खान्ताः
(३.३.३६५) आशुगौ वायुविशिखौ शराऽर्कविहगाः खगाः
(३.३.३६६) पतङ्गौ पक्षिसूर्यौ च पूगः क्रमुकवृन्दयोः
(३.३.३६७) पशवोऽपि मृगा वेगः प्रवाहजवयोरपि
(३.३.३६८) परागः कौसुमे रेणौ स्नानीयादौ रजस्यपि
(३.३.३६९) गजेऽपि नागमातङ्गावपाङ्गस् तिलकेऽपि च
(३.३.३७०) सर्गः स्वभावनिर्मोक्षनिश्चयाऽध्यायसृष्टिषु
(३.३.३७१) योगः संनहनोपायध्यानसंगतियुक्तिषु
(३.३.३७२) भोगः सुखे स्त्र्यादिभृतावहेश् च फणकाययोः
(३.३.३७३) चातके हरिणे पुंसि सारङ्गः शवले त्रिषु
(३.३.३७४) कपौ च प्लवगः शापे त्वभिषङ्गः पराभवे
(३.३.३७५) यानाऽऽद्यङ्गे युगः पुंसि युगं युग्मे कृताऽऽदिषु
(३.३.३७६) स्वर्गेषुपशुवाग्वज्र दिङ्नेत्रधृणिभूजले
(३.३.३७७) लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर् लिङ्गं चिह्न शेफसोः
(३.३.३७८) शृङ्गं प्राधान्यसान्वोश् च वराङ्गं मूर्धगुह्ययोः
(३.३.३७९) भगं श्रीकाममाहात्म्यवीर्ययत्नाऽर्ककीर्तिषु
(३.३.३८०) इति गान्ताः
(३.३.३८१) परिघः परिघातेऽस्त्रेऽप्योघो वृन्देऽम्भसां रये
(३.३.३८२) मूल्ये पूजाविधावर्घोऽहोदुःखव्यसनेष्वघम्
(३.३.३८३) त्रिष्विष्टेऽल्पे लघुः काचाः शिक्यमृद्भेददृग्रुजः

(३.३.३८४) इति घान्ताः
(३.३.३८५) विपर्यासे विस्तरे च प्रपञ्चः पावके शुचिः
(३.३.३८६) मास्यमात्ये चाप्युपधे पुंसि मेध्ये सिते त्रिषु
(३.३.३८७) अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम्
(३.३.३८८) इति चान्ताः
(३.३.३८९) प्रसन्ने भल्लुकेऽप्यच्छो गुच्छः स्तबक हारयोः
(३.३.३९०) परिधानाऽञ्चले कच्छो जलप्रान्ते त्रि लिङ्गकः
(३.३.३९१) इति क्षेपकच्छान्ताः
(३.३.३९२) केकि तार्क्ष्यावहिभुजौ दन्तविप्राऽण्डजा द्विजाः
(३.३.३९३) अजा विष्णुहरच्छागा गोष्ठाऽध्वनिवहा व्रजाः
(३.३.३९४) धर्मराजौ जिनयमौ कुञ्जो दन्तेऽपि न स्त्रियाम्
(३.३.३९५) वलजे क्षेत्रपूर्द्वारे वलजा वल्गुदर्शना
(३.३.३९६) समे क्ष्माऽंशे रणेऽप्याजिः प्रजा स्यात् संततौ जने
(३.३.३९७) अब्जौ शङ्खशशाङ्कौ च स्वके नित्ये निजं त्रिषु
(३.३.३९८) इति जान्ताः
(३.३.३९९) पुंस्यात्मनि प्रवीणेच क्षेत्रज्ञो वाच्यलिङ्गकः
(३.३.४००) संज्ञा स्याच् चेतना नाम हस्ताऽऽद्यैश् चार्थसूचना
(३.३.४०१) दोषज्ञौ वैद्यविद्वांसौ ज्ञो विद्वान् सोमजोऽपि च
(३.३.४०२) इति ञान्ताः
(३.३.४०३) काकेभगण्डौ करटौ गजगण्डकटी कटौ
(३.३.४०४) शिपिविष्टस् तु खलतौ दुश्चर्मणि महेश्वरे
(३.३.४०५) देवशिल्पिन्यपि त्वष्टा दिष्टं दैवेऽपि न द्वयोः
(३.३.४०६) रसे कटुः कट्वकार्ये त्रिषु मत्सरतीक्ष्णयोः
(३.३.४०७) रिष्टं क्षेमाऽशुभाऽभावेष्वरिष्टे तु शुभाऽशुभे

(३.३.४०८) मायानिश्चलयन्त्रेषु कैतवाऽनृतराशिषु
(३.३.४०९) अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्
(३.३.४१०) सूक्ष्मैलायां त्रुटिः स्त्री स्यात् कालेऽल्पे संशयेऽपि सा
(३.३.४११) अत्युत्कर्षाऽश्रयः कोट्यो मूले लग्नकचे जटा
(३.३.४१२) व्युष्टिः फले समृद्धौ च दृष्टिर् ज्ञानेऽक्ष्णि दर्शने
(३.३.४१३) इष्टिर् योगेच्छयोः सृष्टं निश्चिते बहुनि त्रिषु ('बहूनि'?)
(३.३.४१४) कष्टे तु कृच्छ्रगहने दक्षाऽमन्दाऽगदेषु तु
(३.३.४१५) पटुर् द्वौ वाच्यलिङ्गौ च नीलकण्ठः शिवेऽपि च

(३.३.४१६) पोटा दासी द्विलिंगा च घृष्टी घर्षणसूकरौ
(३.३.४१७) घटा घोष्ठ्यां हस्तिपङ्क्तौ कृपीटमुदरे जले
(३.३.४१८) इति टान्ताः
(३.३.४१९) पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा
(३.३.४२०) निष्ठा निष्पत्तिनाशाऽन्ताः काष्ठोत्कर्षे स्थितौ दिशि
(३.३.४२१) त्रिषु ज्येष्ठोऽतिशस्तेऽपि कनिष्ठोऽतियुवाऽल्पयोः
(३.३.४२२) इति ठान्ताः
(३.३.४२३) दण्डोऽस्त्री लगुडेऽपि स्याद् गुडो गोलेक्षुपाकयोः
(३.३.४२४) सर्प मांसात्पशू व्याडौ गोभूवाचस् त्विडा इलाः
(३.३.४२५) क्ष्वेडवंशशलाकाऽपि नाडी कालेऽपि षट्क्षणे
(३.३.४२६) काण्डोऽस्त्री दण्डबाणाऽर्ववर्गाऽवसरवारिषु
(३.३.४२७) स्याद् भाण्डमश्वाऽऽभरणेऽमत्रे मूलवणिग्धने
(३.३.४२८) इति डान्ताः
(३.३.४२९) भृशप्रतिज्ञयोर् बाढं प्रगाढं भृशकृच्छ्रयोः
(३.३.४३०) संघातग्रासयोः पिण्डी द्वयोः पुंसि कलेवरे
(३.३.४३१) गण्डौ कपोलविस्फोटौ मुण्डकस् त्रिषु मुण्डिते
(३.३.४३२) इक्षुभेदेऽपि खण्डोऽस्त्री शिखण्डो बर्हचूडयोः
(३.३.४३३) शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसंहतौ
(३.३.४३४) इति ढान्ताः
(३.३.४३५) भ्रूणोऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे
(३.३.४३६) कणोऽतिसूक्ष्मे धान्यांऽशे संघाते प्रमथे गणः
(३.३.४३७) पणो द्यूताऽऽदिषूत्सृष्टे भृतौ मूल्ये धनेऽपि च
(३.३.४३८) मौर्व्यां द्रव्याऽऽश्रिते सत्वशौर्यसंध्याऽऽदिके गुणः
(३.३.४३९) निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः
(३.३.४४०) वर्णो द्विजाऽऽदौ शुक्लाऽऽदौ स्तुतौ वर्णं तु वाऽक्षरे
(३.३.४४१) अरुणो भास्करेऽपि स्याद् वर्णभेदेऽपि च त्रिषु
(३.३.४४२) स्थाणुः शर्वोऽप्यथ द्रोणः काकेऽप्याजौ रवे रणः
(३.३.४४३) ग्रामणीर् नापिते पुंसि श्रेष्ठे ग्रामाऽधिपे त्रिषु
(३.३.४४४) ऊर्णा मेषाऽऽदिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः
(३.३.४४५) हरिणी स्यान् मृगी हेमप्रतिमा हरिता च या
(३.३.४४६) त्रिषु पाण्डौ च हरिणः स्थूणा स्तम्भेऽपि वेश्मनः
(३.३.४४७) तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे
(३.३.४४८) वणिक्पथे च विपणिः सुरा प्रत्यक् च वारुणी
(३.३.४४९) करेणुरिभ्यां स्त्री नेभे द्रविणं तु बलं धनम्

(३.३.४५०) शरणं गृहरक्षित्रोः श्रीपर्णं कमलेऽपि च
(३.३.४५१) विषाऽभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु
(३.३.४५२) प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु
(३.३.४५३) करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि
(३.३.४५४) प्राण्युत्पादे संसरणमसंबाधचमूगतौ
(३.३.४५५) घण्टापथेऽथ वान्ताऽन्ने समुद्गिरणमुन्नये
(३.३.४५६) अतस् त्रिषु विषाणं स्यात् पशुशृङ्गेभदन्तयोः
(३.३.४५७) प्रवणे क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे
(३.३.४५८) संकीर्णौ निचिताऽशुद्धा विरिणं शून्यमूषरम्
(३.३.४५९) सेतौ च चरणो वेणी नदीभेदे कचोच्चये
(३.३.४६०) इति णान्ताः
(३.३.४६१) देवसूर्यौ विवस्वन्तौ सरस्वन्तौनदाऽर्णवौ
(३.३.४६२) पक्षिताक्ष्यौं गरुत्मन्तौ शकुन्तौ भासपक्षिणौ
(३.३.४६३) अग्न्युत्पातौ धूमकेतू जीमूतौ मेघपर्वतौ
(३.३.४६४) हस्तौ तु पाणिनक्षत्रे मरुतौ पवनाऽमरौ
(३.३.४६५) यन्ता हस्तिपके सूते भर्ता धातरि पोष्टरि
(३.३.४६६) यानपात्रे शिशौ पोतः प्रेतः प्राण्यन्तरे मृते
(३.३.४६७) ग्रहभेदे ध्वजे केतुः पार्थिवे तनये सुतः
(३.३.४६८) स्थपतिः कारुभेदेऽपि भूभृद् भूमिधरे नृपे
(३.३.४६९) मूर्धाभिषिक्तो भूपेऽपि ऋतुः स्त्री कुसुमेऽपि च
(३.३.४७०) विष्णावप्यजिताऽव्यक्तौ सूतस् त्वष्टरि सारथौ
(३.३.४७१) व्यक्तः प्राज्ञेऽपि दृष्टान्तावुभौ शास्त्रनिदर्शने
(३.३.४७२) क्षत्ता स्यात् सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे
(३.३.४७३) वृत्तान्तः स्यात् प्रकरणे प्रकारे कार्त्स्न्यवार्तयोः
(३.३.४७४) आनर्तः समरे नृत्यस्थान नीवृद्विशेषयोः
(३.३.४७५) कृतान्तो यम सिद्धान्त दैवाऽकुशलकर्मसु
(३.३.४७६) श्लेष्माऽऽदि रस रक्ताऽऽदि महा भूतानि तद् गुणाः
(३.३.४७७) इन्द्रियाण्यश्म विकृतिः शब्दयोनिश् च धातवः
(३.३.४७८) कक्षान्तरेऽपि शुद्धान्तो भूपस्याऽसर्व गोचरे
(३.३.४७९) कासू सामर्थ्ययोः शक्तिर् मूर्तिः काठिन्यकाययोः ॥
(३.३.४८०) विस्तार वल्लयोर् व्रततिर् वसती रात्रिवेश्मनोः
(३.३.४८१) क्षयाऽर्चयोरपचितिः सातिर् दानाऽवसानयोः ॥
(३.३.४८२) आर्तिः पीडा धनुष्कोट्योर् जातिः सामान्यजन्मनोः
(३.३.४८३) प्रचार स्यन्दयो रीतिरीतिर् डिम्ब प्रवासयोः
(३.३.४८४) उदयेऽधिगमे प्राप्तिस्त्रेता त्वग्नित्रये युगे
(३.३.४८५) वीणाभेदेऽपि महती भूतिर् भस्मनि सम्पदि
(३.३.४८६) नदी नगर्योर् नागानां भोगवत्यथ संगरे
(३.३.४८७) संगे सभायां समितिः क्षयवासावपि क्षिती
(३.३.४८८) रवेरर्चिश् च शस्त्रं च वह्निज्वाला च हेतयः
(३.३.४८९) जगती जगति छन्दोविशेषोऽपि क्षितावपि
(३.३.४९०) पङ्क्तिश् छन्दोऽपि दशमं स्यात् प्रभावेऽपि चाऽऽयतिः
(३.३.४९१) पत्तिर् गतौ च मूले तु पक्षतिः पक्षभेदयोः
(३.३.४९२) प्रकृतिर् योनिलिङ्गे च कैशिक्याऽऽद्याश् च वृत्तयः

(३.३.४९३) सिकताः स्युर् वालुकाऽपि वेदे श्रवसि च श्रुतिः
(३.३.४९४) वनिता जनिताऽत्यर्थाऽनुरागायां च योषिति
(३.३.४९५) गुप्तिः क्षितिव्युदासेऽपि धृतिर् धारणधैर्ययोः
(३.३.४९६) बृहती क्षुद्र वार्ताकी छन्दोभेदे महत्यपि
(३.३.४९७) वासिता स्त्री करिण्योश् च वार्ता वृत्तौ जनश्रुतौ
(३.३.४९८) वार्तं फल्गुन्यरोगे च त्रिष्वप्सु च घृताऽमृते
(३.३.४९९) कलधौतं रूप्यहेम्नोर् निमित्तम् हेतुलक्ष्मणोः
(३.३.५००) श्रुतं शास्त्राऽवधृतयोर् युगपर्याप्तयोः कृतम्
(३.३.५०१) अत्याहितं महाभीतिः कर्म जीवाऽनपेक्षि च
(३.३.५०२) युक्ते क्ष्माऽऽदावृते भूतं प्राण्यतीते समे त्रिषु
(३.३.५०३) वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले
(३.३.५०४) महद् राज्यं चाऽवगीतं जन्ये स्याद् गर्हिते त्रिषु
(३.३.५०५) श्वेतं रूप्येऽपि रजतं हेम्नि रूप्ये सिते त्रिषु
(३.३.५०६) त्रिष्वितो जगदिङ्गेऽपि रक्तं नील्याऽऽदि रागि च
(३.३.५०७) अवदातः सिते पीते शुद्धे बद्धाऽर्जुनौ सितौ
(३.३.५०८) युक्तेऽति संस्कृतेऽमर्षिण्यभिनीतोऽथ संस्कृतम्
(३.३.५०९) कृत्रिमे लक्षणोपेतेऽप्यनन्तोऽनवधावपि
(३.३.५१०) ख्याते हृष्टे प्रतीतोऽभिजातस् तु कुलजे बुधे
(३.३.५११) विविक्तौ पूतविजनौ मूर्छितौ मूढसोच्छ्रयौ
(३.३.५१२) द्वौ चाम्ल परुषौ शुक्तौ शिती धवलमेचकौ
(३.३.५१३) सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हिते च सत्
(३.३.५१४) पुरस्कृतः पूजितेऽरात्यभियुक्तेऽग्रतः कृते
(३.३.५१५) निवातावाश्रयाऽवातौ शस्त्राऽभेद्यं च वर्म यत्
(३.३.५१६) जातोन्नद्धप्रवृद्धाः स्युरुच्छ्रिता उत्थितास् त्वमी
(३.३.५१७) वृद्धिमत् प्रोद्यतोत्पन्ना आदृतौ सादराऽर्चितौ
(३.३.५१८) समूहोत्पन्नयोर् जातमहिजिच् छ्रीपतीन्द्रयोः
(३.३.५१९) सौप्तिकेऽपि प्रपातोऽथावपातावतटावटौ
(३.३.५२०) समित् सङ्गे रणेऽपि स्त्री व्यवस्थायामपि स्थितिः
(३.३.५२१) अर्थोऽभिधेय रै वस्तु प्रयोजन निवृत्तिषु
(३.३.५२२) निपानाऽऽगमयोस् तीर्थमृषि जुष्टे जले गुरौ
(३.३.५२३) समर्थस् त्रिषु शक्तिस्थे संबद्धाऽर्थे हितेऽपि च
(३.३.५२४) दशमीस्थौ क्षीणराग वृद्धौ वीथी पदव्यपि
(३.३.५२५) आस्थानी यत्नयोरास्था प्रस्थोऽस्त्री सानु मानयोः
(३.३.५२६) शास्त्र द्रविणयोर् ग्रन्थः संस्थाऽऽधारे स्थितौ मृतौ
(३.३.५२७) इति थान्ताः
(३.३.५२८) अभिप्राय वशौ छन्दावब्दौ जीमूत वत्सरौ
(३.३.५२९) अपवादौ तु निन्दाऽऽज्ञे दायादौ सुत बान्धवौ
(३.३.५३०) पादा रश्म्यङ्घ्रि तुर्यांशाश् चन्द्राऽग्न्यर्कास् तमोनुदः
(३.३.५३१) निर्वादो जनवादेऽपि शादो जम्बाल शष्पयोः
(३.३.५३२) आरावे रुदिते त्रातर्याक्रन्दो दारुणे रणे
(३.३.५३३) स्यात् प्रसादोऽनुरगेऽपि सूदः स्याद् व्यञ्जनेऽपि च
(३.३.५३४) गोष्ठाऽध्यक्षेऽपि गोविन्दो हर्षेऽप्यामोदवन् मदः
(३.३.५३५) प्राधान्ये राजलिङ्गे च वृषाङ्गे ककुदोऽस्त्रियाम्
(३.३.५३६) स्त्री संविज्ज्ञान संभाषा क्रियाकाराऽऽजि नामसु
(३.३.५३७) धर्मे रहस्युपनिषत् स्यादृतौ वत्सरे शरत्
(३.३.५३८) पदं व्यवसिति त्राण स्थान लक्ष्माङ्घ्रि वस्तुषु
(३.३.५३९) गोष्पदं सेविते माने प्रतिष्ठा कृत्यमास्पदम्
(३.३.५४०) त्रिष्विष्ट मधुरौ स्वादू मृदू चातीक्ष्ण कोमलौ
(३.३.५४१) मूढाऽल्पाऽपटु निर्भाग्या मन्दाः स्युर् द्वौ तु शारदौ
(३.३.५४२) प्रत्यग्राऽप्रतिभौ विद्वत् सुप्रगल्भौ विशारदौ
(३.३.५४३) इति दान्ताः
(३.३.५४४) व्यामो वटश् च न्यग्रोधावुत्सेधः काय उन्नतिः
(३.३.५४५) पर्याहारश् च मार्गश्,ह् च विवधौ वीवधौ च तौ
(३.३.५४६) परिधिर् यज्ञिय तरोः शाखायामुपसूर्यके
(३.३.५४७) बन्धकं व्यसनं चेतः पीडाऽधिष्ठानमाधयः
(३.३.५४८) स्युः समर्थन नीवाक नियमाश् च समाधयः
(३.३.५४९) दोषोत्पादेऽनुबन्धः स्यात् प्रकृतस्याऽदि विनश्वरे
(३.३.५५०) मुख्याऽनुयायिनि शिशौ प्रकृत्याऽनुवर्तने
(३.३.५५१) विधुर् विष्णौ चन्द्रमसि परिच्छेदे बिलेऽवधिः
(३.३.५५२) विधिर् विधाने दैवेऽपि प्रणिधिः प्रार्थने चरे
(३.३.५५३) बुध वृद्धौ पण्डितेऽपि स्कन्धः समुदयेऽपि च
(३.३.५५४) देशे नद विशेषेऽब्धौ सिन्धुर् ना सरिति स्त्रियाम्
(३.३.५५५) विधा विधौ प्रकारे च साधू रम्येऽपि च त्रिषु
(३.३.५५६) वधूर् जाया स्नुषा स्त्री च सुधा लेपोऽमृतं स्नुही
(३.३.५५७) संधा प्रतिज्ञा मर्यादा श्रद्धा संप्रत्ययः स्पृहा
(३.३.५५८) मधु मद्ये पुष्परसे क्षौद्रेऽप्यन्धं तमस्यपि
(३.३.५५९) अतस् त्रिषु समुन्नद्धौ पण्डितंमन्य गर्वितौ
(३.३.५६०) ब्रह्मबन्धुरधिक्षेपे निर्देशेऽथाऽवलम्बितः
(३.३.५६१) अविदूरोऽप्यवष्टब्धः प्रसिद्धौ ख्यात भूषितौ
(३.३.५६२) लेशेऽपि गन्धः संबाधो गुह्यसंकुलयोरपि
(३.३.५६३) बाधा निषेधे दुःखे च ज्ञातृचान्द्रिसुरा बुधाः
। इति धान्ताः
(३.३.५६४) सूर्य वह्नी चित्रभानू भानू रश्मि दिवाकरौ
(३.३.५६५) भूतात्मानौ धातृ देहौ मूर्ख नीचौ पृथग्जनौ
(३.३.५६६) ग्रावाणौ शैलपाषाणौ पत्रिणौ शरपक्षिणौ
(३.३.५६७) तरुशैलौ शिखरिणौ शिखिनौ वह्नि बर्हिणौ
(३.३.५६८) प्रतियत्नावुभौ लिप्सोपग्रहावथ सादिनौ
(३.३.५६९) द्वौ सारथि हयारोहौ वाजिनोऽश्वेषु पक्षिणः
(३.३.५७०) कुलेऽप्यभिजनो जन्म भूम्यामप्यथ हायनाः
(३.३.५७१) वर्षार्चिर् व्रीहिभेदाश् च चन्द्राग्न्यर्का विरोचनाः
(३.३.५७२) केशेऽपि वृजिनो विश्वकर्माऽर्क सुरशिल्पिनोः
(३.३.५७३) आत्मा यत्नो धृतिर् बुद्धिः स्वभावो ब्रह्म वर्ष्म च
(३.३.५७४) शक्रो घातुक मत्तेभो वर्षुकाऽब्दो घनाघनः
(३.३.५७५) अभिमानोऽर्थाऽऽदि दर्पे ज्ञाने प्रणय हिंसयोः
(३.३.५७६) घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे
(३.३.५७७) इनः सूर्ये प्रभौ राजा मृगाङ्के क्षत्रिये नृपे

(३.३.५७८) वाणिन्यौ नर्तकी दूत्यौ स्रवन्त्यामपि वाहिनी
(३.३.५७९) ह्लादिन्यौ वज्रतडितौ वन्दायामपि कामिनी
(३.३.५८०) त्वग् देहयोरपि तनुः सूनाऽधो जिह्विकाऽपि च
(३.३.५८१) ऋतु विस्तारयोरस्त्री वितानं त्रिषु तुच्छके
(३.३.५८२) मन्देऽथ केतनं कृत्ये केतावुपनिमन्त्रणे
(३.३.५८३) वेदस् तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः
(३.३.५८४) उत्साहने च हिंसायां सूचने चाऽपि गन्धनम्
(३.३.५८५) आतञ्चनं प्रतीवाप जवनाऽऽप्यायनाऽर्थकम्
(३.३.५८६) व्यञ्जनं लाञ्छनं श्मश्रु निष्ठानाऽवयवेष्वपि
(३.३.५८७) स्यात् कौलीनं लोकवादे युद्धे पश्वहि पक्षिणाम्
(३.३.५८८) स्यादुद्यानं निःसरणे वनभेदे प्रयोजने
(३.३.५८९) अवकाशे स्थितौ स्थानं क्रीडाऽऽदावपि देवनम्
(३.३.५९०) व्युत्थानं प्रतिरोधे च विरोधाऽऽचरणेऽपि च
(३.३.५९१) उत्थानं पौरुषे तन्त्रे संनिविष्टोद्गमेऽपि च
(३.३.५९२) मारणे मृतसंस्कारे गतौ द्रव्येऽर्थ दापने
(३.३.५९३) निर्वर्तनोपकरणाऽनुव्रज्यासु च साधनम्
(३.३.५९४) निर्यातनं वैर शुद्धौ दाने न्यासाऽर्पणेऽपि च
(३.३.५९५) व्यसनं विपदि भ्रंशे दोषे कामजकोपजे
(३.३.५९६) पक्ष्माऽक्षिलोम्नि किञ्जल्के तन्त्वाऽऽद्यम्शेऽप्यणीयसि
(३.३.५९७) तिथिभेदे क्षणे पर्व वर्त्म नेत्रच्छदेऽध्वनि
(३.३.५९८) अकार्यगुह्ये कौपीनं मैथुनं संगतौ रते
(३.३.५९९) प्रधानं परमाऽऽत्मा धीः प्रज्ञानं बुद्धिचिह्नयोः
(३.३.६००) प्रसूनं पुष्पफलयोर् निधनं कुलनाशयोः
(३.३.६०१) क्रन्दने रोदनाऽऽह्वाने वर्ष्म देहप्रमाणयोः
(३.३.६०२) गृहदेहत्विट्प्रभावा धामान्यथ चतुष्पथे
(३.३.६०३) संनिवेशे च संस्थानं लक्ष्म चिह्नप्रधानयोः
(३.३.६०४) आच्छादने संविधानमपवारणमित्युभे
(३.३.६०५) आराधनं साधने स्यादवाप्तौ तोषणेऽपि च
(३.३.६०६) अधिष्ठानं चक्रपुरप्रभावाऽध्यासनेष्वपि
(३.३.६०७) रत्नं स्वजातिश्रेष्ठेऽपि वने सलिलकानने
(३.३.६०८) तलिनं विरले स्तोके वाच्यलिङ्गं तथोत्तरे
(३.३.६०९) समानाः सत्समैके स्युः पिशुनौ खलसूचकौ
(३.३.६१०) हीनन्यूनावूनगर्ह्यौ वेगिशूरौ तरस्विनौ
(३.३.६११) अभिपन्नोऽपराद्धोऽभिग्रस्तव्यापद्गतावपि
।इति नान्ताः
(३.३.६१२) कलापो भूषणे बर्हे तूणीरे संहतावपि
(३.३.६१३) परिच्छदे परीवापः पर्युप्तौ सलिलस्थितौ
(३.३.६१४) गोधुग्गोष्ठपती गोपौ हरविष्णू वृषाकपी
(३.३.६१५) बाष्पमूष्माश्रु कशिपु त्वन्नमाच्छादनं द्वयम्
(३.३.६१६) तल्पं शय्याऽट्टदारेषु स्तम्बेऽपि विटपोऽस्त्रियाम्
(३.३.६१७) प्राप्तरूपस्वरूपाऽभिरूपा बुधमनोज्ञयोः
(३.३.६१८) भेद्यलिङ्गा अमी कूर्मी वीणाभेदश्च कच्छपी
(३.३.६१९) कुतपो मृगरोमोत्थपटे चाह्नो ष्टमेंऽशके

।इति पान्ताः
(३.३.६२०) शिफा शिखायां सरिति मांसिकायां च मातरि
(३.३.६२१) शफं मूले तरूणां स्याद्गवादीनां खुरेऽपि च
(३.३.६२२) गुल्फः स्याद्गुंफने बाहोरलंकारे च कीर्तितः
(३.३.६२३) रवर्णे पुंसि रेफः स्यात्कुत्सिते वाच्यलिङ्गकः
।इति फान्ताः
(३.३.६२४) अन्तराभवसत्वेऽश्वे गन्धर्वो दिव्यगायने
(३.३.६२५) कम्बुर् ना वलये शङ्खे द्विजिह्वौ सर्पसूचकौ
(३.३.६२६) पूर्वोऽन्यलिङ्गः प्रागाह पुमूबहुत्वेऽपि पूर्वजान्
(३.३.६२७) चित्रपुङ्खेऽपि कादम्बो नितम्बोऽद्रितटे कटौ
(३.३.६२८) दर्वी फणाऽपि बिम्बोऽस्त्री मण्डलेऽपि च
।इति बान्ताः
(३.३.६२९) कुम्भौ घटेभमूर्धांशौ डिम्भौ तु शिशुबालिशौ
(३.३.६३०) स्तम्भौ स्थूणाजडीभावौ शम्भू ब्रह्मत्रिलोचनौ
(३.३.६३१) कुक्षिभ्रूणाऽर्भका गर्भा विस्रम्भः प्रणयेऽपि च
(३.३.६३२) स्याद्भेर्यां दुन्दुभिः पुंसि स्यादक्षे दुन्दुभिः स्त्रियाम्
(३.३.६३३) स्यान्महारजते क्लीबं कुसुम्भं करके पुमान्
(३.३.६३४) क्षत्रियेऽपि च नाभिर् ना सुरभिर् गवि च स्त्रियाम्
(३.३.६३५) सभा संसदि सभ्ये च त्रिष्वध्यक्षेऽपि वल्लभः
।इति भान्ताः
(३.३.६३६) किरण प्रग्रहौ रश्मी कपिभेकौ प्लवङ्गमौ
(३.३.६३७) इच्छामनोभवौ कामौ शक्त्युद्योगौ पराक्रमौ
(३.३.६३८) धर्माः पुण्ययमन्यायस्वभावाऽऽचारसोमपाः
(३.३.६३९) उपायपूर्व आरम्भ उपधा चाप्युपक्रमः
(३.३.६४०) वणिक्पथः पुरं वेदो निगमा नागरो वणिक्
(३.३.६४१) नैगमौ द्वौ बले रामो नीलचारुसिते त्रिषु
(३.३.६४२) शब्दाऽऽदिपूर्वो वृन्देऽपि ग्रामः क्रान्तौ च विक्रमः
(३.३.६४३) स्तोमः स्तोत्रेऽध्वरे वृन्दे जिह्मास्तु कुतिलेऽलसे
(३.३.६४४) उष्णेऽपि घर्मश् चेष्टाऽलङ्कारे भ्रान्तौ च विभ्रमः
(३.३.६४५) गुल्मा रुक्स्तम्बसेनाश्च जामिः स्वसृकुलस्त्रियोः
(३.३.६४६) क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु
(३.३.६४७) त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा
(३.३.६४८) ललामं पुच्छपुण्ड्राऽश्वभूषाप्राधान्यकेतुषु
(३.३.६४९) सूक्ष्ममध्यात्ममप्याद्ये प्रधाने प्रथमस्त्रिषु
(३.३.६५०) वामौ वल्गुप्रतीपौ द्वावधमौ न्यूनकुत्सितौ
(३.३.६५१) जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्
।इति गान्ताः
(३.३.६५२) तुरङ्गगरुडौ तार्क्ष्यौ निलयाऽपचयौ क्षयौ
(३.३.६५३) श्वशुर्यौ देवरश्यालौ भ्रातृव्यौ भ्रातृजद्विषौ
(३.३.६५४) पर्जन्यौ रसदब्देन्द्रौ स्यादर्यः स्वामिवैश्ययोः
(३.३.६५५) तिष्यः पुष्ये कलियुगे पर्यायोऽवसरे क्रमे
(३.३.६५६) प्रत्ययोऽधीन शपथज्ञानविश्वासहेतुषु
(३.३.६५७) रन्ध्रे शब्देऽथानुशयो दीर्घद्वेषाऽनुतापयोः

(३.३.६५८) स्थूलोच्चयस् त्वसाकल्ये नागानां मध्यमे गते
(३.३.६५९) समयाः शपथाऽऽचारकालसिद्धान्तसंविदः
(३.३.६६०) व्यसनान्यशुभं दैवं विपदित्यनयास्त्रयः
(३.३.६६१) अत्ययोऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्यथाऽऽपदि
(३.३.६६२) युद्धायत्योः संपरायः पूज्यस्तु श्वशुरेऽपि च
(३.३.६६३) पस्त्वादवस्थायि बलं समवायश्च सन्नयौ
(३.३.६६४) संघाते संनिवेशे च संस्त्यायः प्रणयास्त्वमी
(३.३.६६५) विस्रम्भयाञ्चाप्रेमाणो विरोधेऽपि समुच्छ्रयः
(३.३.६६६) विषयो यस्य यो ज्ञातस् तत्र शब्दाऽऽदिकेष्वपि
(३.३.६६७) निर्यासेऽपि कषायो स्त्री सभायां च प्रतिश्रयः
(३.३.६६८) प्रायो भूम्न्यन्तगमने मन्युर् दैन्ये क्रतौ क्रुधि
(३.३.६६९) रहस्योपस्थयोर् गुह्यं सत्यं शपथतथ्ययोः
(३.३.६७०) वीर्यं बले प्रभावे च द्रव्यं भव्ये गुणाऽऽश्रये
(३.३.६७१) धिष्ण्यं स्थाने गृहे भेऽग्नौ भाग्यं कर्म शुभाऽशुभम्
(३.३.६७२) कशेरु हेम्नोर् गाङ्गेयं विशल्या दन्तिकाऽपि च
(३.३.६७३) वृषाकपायी श्रीगौर्योरभिज्ञा नामशोभयोः
(३.३.६७४) आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम्
(३.३.६७५) उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः
(३.३.६७६) छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः
(३.३.६७७) कक्ष्या प्रकोष्ठे हर्म्याऽऽदेः काञ्च्यां मध्येभबन्धने
(३.३.६७८) कृत्या क्रियादेवतयोस् त्रिषु भेद्ये धनाऽऽदिभिः
(३.३.६७९) जन्यः स्याज्जनवादेऽपि जघन्योऽन्त्येऽधमेऽपि च
(३.३.६८०) गर्ह्याऽधीनौ च वक्तव्यौ कल्यौ सज्जनिरामयौ
(३.३.६८१) आत्मवाननपेतोऽर्थादर्थ्यौ पुण्यं तु चार्वपि
(३.३.६८२) रूप्यं प्रशस्तरूपेऽपि वदान्यो वल्गुवागपि
(३.३.६८३) न्याय्येऽपि मध्यं सौम्यं तु सुन्दरे सोमदैवते
। इति यान्ताः
(३.३.६८४) निवहाऽवसरौ वारौ संस्तरौ प्रस्तराऽध्वरौ
(३.३.६८५) गुरू गोष्पतिपित्राद्यौ द्वापरौ युगसंशयौ
(३.३.६८६) प्रकारौ भेदसादृश्ये आकाराविङ्गिताऽऽकृती
(३.३.६८७) किंशारू धान्यशूकेषु मरू धन्वधराधरौ
(३.३.६८८) अद्रयो द्रुमशैलाऽर्काः स्त्रीस्तनाऽब्दौ पयोधरौ
(३.३.६८९) ध्वान्ताऽरिदानवा वृत्रा बलिहस्ताऽंशवः कराः
(३.३.६९०) प्रदरा भङ्गनारीरुग्बाणा अस्राः कचा अपि
(३.३.६९१) अजातशृङ्गो गौः कालेऽप्यश्मश्रुर्ना च तूबरौ
(३.३.६९२) स्वर्णेऽपि राः परिकरः पर्यङ्कपरिवारयोः
(३.३.६९३) मुक्ताशुद्धौ च तारः स्याच्छारो वायौ स तु त्रिषु
(३.३.६९४) कर्बुरेऽथ प्रतिज्ञाऽऽजिसंविदापत्सु संगरः
(३.३.६९५) वेदभेदे गुप्तवादे मन्त्रो मित्रो रवावपि
(३.३.६९६) मखेषु यूपखण्डेऽपि स्वरुर्गुह्येऽप्यवस्करः
(३.३.६९७) आडम्बरस् तूर्यरवे गजेन्द्राणां च गर्जिते
(३.३.६९८) अभिहारोऽभियोगे च चौर्ये संनहनेऽपि च
(३.३.६९९) स्याज्जङ्गमे परीवारः खड्गकोशे परिच्छदे
(३.३.७००) विष्टरो विटपी दर्भमुष्टिः पीठाऽऽद्यमासनम्
(३.३.७०१) द्वारि द्वाः स्थे प्रतीहारः प्रतीहार्यप्यनन्तरे
(३.३.७०२) विपुले नकुले विष्णौ बभ्रुर्ना पिङ्गले त्रिषु
(३.३.७०३) सारो बले स्थिराऽंशे च न्याय्ये क्लीबं वरे त्रिषु
(३.३.७०४) दुरोदरो द्यूतकारे पणे द्यूते दुरोदरम्
(३.३.७०५) महाऽरण्ये दुर्गपथे कान्तारं पुन्नपुंसकम्
(३.३.७०६) मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु
(३.३.७०७) देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये
(३.३.७०८) वंशाङ्कुरे करीरोऽस्त्री तरुभेदे घटे च ना
(३.३.७०९) ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम्
(३.३.७१०) यमाऽनिलेन्द्रचन्द्रार्कविष्णुसिंहाऽंशुवाजिषु
(३.३.७११) शुकाऽहिकपिभेकेषु हरिर्ना कपिले त्रिषु
(३.३.७१२) शर्करा कर्पराऽंशेऽपि यात्रा स्याद्यापने गतौ
(३.३.७१३) इरा भूवाक्सुराऽप्सुस्यात् तन्द्री निद्राप्रमीलयोः
(३.३.७१४) धात्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि
(३.३.७१५) क्षुद्रा व्यङ्गा नटी वेश्या सरघा कण्टकारिका
(३.३.७१६) त्रिषु क्रूरेऽधमेऽल्पेऽपि क्षुद्रं मात्रा परिच्छदे
(३.३.७१७) अल्पे च परिमाणे सा मात्रं कार्त्स्न्येऽवधारणे
(३.३.७१८) आलेख्याऽऽश्चर्ययोश्चित्रं कलत्रं श्रोणिभार्ययोः
(३.३.७१९) योग्यभाजनयोः पात्रं पत्रं वाहनपक्षयोः
(३.३.७२०) निदेशग्रन्थयोः शास्त्रं शस्त्रमायुधलोहयोः
(३.३.७२१) स्याज्जटाऽंशुकयोर्नेत्रं क्षेत्रं पत्नीशरीरयोः
(३.३.७२२) मुखाग्रे क्रोडहलयोः पोत्रं गोत्रं तु नाम्नि च
(३.३.७२३) सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च
(३.३.७२४) अजिरं विषये कायेऽप्यंबरं व्योम्नि वाससि
(३.३.७२५) चक्रं राष्ट्रेऽप्यक्षरं तु मोक्षेऽपि क्षीरमप्सु च
(३.३.७२६) स्वर्णेऽपि भूरिचन्द्रौ द्वौ द्वारमात्रेऽपि गोपुरम्
(३.३.७२७) गुहादम्भौ गह्वरे द्वे रहोऽन्तिकमुपह्वरे
(३.३.७२८) पुरोऽधिकमुपर्यग्राण्यगारे नगरे पुरम्
(३.३.७२९) मन्दिरं चाथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे
(३.३.७३०) दरोऽस्त्रियां भये श्वभ्रे वज्रोऽस्त्री हीरके पवौ
(३.३.७३१) तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे
(३.३.७३२) औशीरश्चामरे दण्डेऽप्यौशीरं शयनाऽऽसने
(३.३.७३३) पुष्करं करिहस्ताऽग्रे वाद्यभाण्डमुखे जले
(३.३.७३४) व्योम्नि खड्गफले पद्मे तीर्थौषधिविशेषयोः
(३.३.७३५) अन्तरमवकाशाऽवधिपरिधानान्तर्धिभेदतादर्थ्ये
(३.३.७३६) छिद्राऽऽत्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च
(३.३.७३७) मुस्तेऽपि पिठरं राजकशेरुण्यपि नागरम्
(३.३.७३८) शार्वरं त्वन्धतमसे घातुके भेद्यलिङ्गकम्
(३.३.७३९) गौरोऽरुणे सिते पीते व्रणकार्यप्यरुष्करः
(३.३.७४०) जठरः कठिनेऽपि स्यादधस्तादपि चाऽधरः
(३.३.७४१) अनाकुलेऽपि चैकाग्रो व्यग्रो व्यासक्त आकुले
(३.३.७४२) उपरुदीच्यश्रेष्ठेष्वप्युत्तरः स्यादनुत्तरः

(३.३.७४३) एषां विपर्यये श्रेष्ठे दूराऽनात्मोत्तमाः पराः
(३.३.७४४) स्वादुप्रियौ च मधुरौ क्रूरौ कठिननिर्दयौ
(३.३.७४५) उदारौ दातृमहतोरितरस्त्वन्यनीचयोः
(३.३.७४६) मन्दस्वच्छन्दयोः स्वैरः शुभ्रमुद्दीप्तशुक्लयोः
(३.३.७४७) आसारो वेगवद्वर्षे सैन्यप्रसरणं तथा
(३.३.७४८) धाराम्बुपाते चोत्कर्षेऽस्त्रौ कटाहे तु कर्परः
(३.३.७४९) बन्धुरं सुन्दरे नम्रे गिरिर्गेन्दुकशैलयोः
(३.३.७५०) चरुः स्थाल्यां हविः पक्ताऽवधीरः कातरे चले
।इति रान्ताः
(३.३.७५१) चूडा किरीटम् केशाश्च संयता मौलयस्त्रयः
(३.३.७५२) द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलवः
(३.३.७५३) कृतान्ताऽनेहसोः कालश्चतुर्थेऽपि युगे कलिः
(३.३.७५४) स्यात्कुरङ्गेऽपि कमलः प्रावारेऽपि च कम्बलः
(३.३.७५५) करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम्
(३.३.७५६) स्थौल्यसामर्थ्यसैन्येषु बलं ना काकसीरिणोः
(३.३.७५७) वातूलः पुंसि वात्यायामपि वाताऽसहे त्रिषु
(३.३.७५८) भेद्यलिङ्गः शठे व्यालः पुंसि श्वापदसर्पयोः
(३.३.७५९) मलोऽस्त्री पापविड्किट्टान्यस्त्री शूलं रुगायुधम्
(३.३.७६०) शङ्कावपि द्वयोः कीलः पालिः स्त्र्यश्र्यङ्कपङ्क्तिषु
(३.३.७६१) कला शिल्पे कालभेदे चाऽऽली सख्यावली अपि
(३.३.७६२) अब्ध्यम्बुविकृतौ वेला कालमर्यादयोरपि
(३.३.७६३) बहुलाः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु
(३.३.७६४) लीला विलासक्रिययोरुपला शर्कराऽपि च
(३.३.७६५) शोणितेऽम्भसि कीलालं मूलमाद्ये शिफाभयोः
(३.३.७६६) जालं समूह आनायगवाक्षक्षारकेष्वपि
(३.३.७६७) शीलं स्वभावे सद्वृत्ते सस्ये हेतुकृते फलम्
(३.३.७६८) छदिर्नेत्ररुजोः क्लीबं समूहे पटलं न ना
(३.३.७६९) अधस्स्वरूपयोरस्त्री तलं स्याच्चामिषे पलम्
(३.३.७७०) और्वाऽनलेऽपि पातालं चैलं वस्त्रेऽधमे त्रिषु
(३.३.७७१) कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषाऽनले
(३.३.७७२) निर्णीते केवलमिति त्रिलिङ्गं त्वेककृत्स्नयोः
(३.३.७७३) पर्याप्तिक्षेमपुण्येषु कुशलं शिक्षिते त्रिषु
(३.३.७७४) प्रवालमङ्कुरेऽप्यस्त्री त्रिषु स्थूलं जडेऽपि च
(३.३.७७५) करालो दन्तुरे तुङ्गे चारौ दक्षे च पेशलः
(३.३.७७६) मूर्खेऽर्भकेऽपि बालः स्याल्लोलश्चलसतृष्णयोः
(३.३.७७७) कुलं गृहेऽपि तालाङ्के कुबेरे चैककुण्डलः
(३.३.७७८) स्त्रीभावावज्ञयोर्हेला हेलिः सूर्ये रणे हिलिः
(३.३.७७९) हालः स्यान्नृपतौ मद्ये शकलच्छदयोर्दलम्
(३.३.७८०) तूलिश्चित्रोपकरणशलाकातूलशय्ययोः
(३.३.७८१) तुमुलं व्याकुले शब्दे शष्कुली कर्णपाल्यपि
।इति लान्ताः
(३.३.७८२) दवदावौ वनाऽरण्यवह्नी जन्महरौ भवौ
(३.३.७८३) मन्त्री सहायः सचिवौ पतिशाखिनरा धवाः
(३.३.७८४) अवयः शैलमेषाऽर्का आज्ञाऽऽह्वानाध्वरा हवाः
(३.३.७८५) भावः सत्तास्वभावाऽभिप्रायचेष्टाऽऽत्मजन्मसु
(३.३.७८६) स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने
(३.३.७८७) अविश्वासेऽपह्नवेऽपि निकृतावपि निह्नवः
(३.३.७८८) उत्सेकाऽमर्षयोरिच्छाप्रसरे मह उत्सवः
(३.३.७८९) अनुभावः प्रभावे च सतां च मतिनिश्चये
(३.३.७९०) स्याज्जन्महेतुः प्रभवः स्थानं चाऽऽद्योपलब्धये
(३.३.७९१) शूद्रायां विप्रतनये शस्त्रे पारशवो मतः
(३.३.७९२) ध्रुवो भभेदे क्लीबे तु निश्चिते शाश्वते त्रिषु
(३.३.७९३) स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने
(३.३.७९४) स्त्रीकटीवस्त्रबन्धेऽपि नीवी परिपणेऽपि च
(३.३.७९५) शिवा गौरीफेरवयोर्द्वन्द्वं कलहयुग्मयोः
(३.३.७९६) द्रव्याऽसु व्यवसायेऽपि सत्त्वमस्त्री तु जन्तुषु
(३.३.७९७) क्लीबं नपुंसकं षण्डे वाच्यलिङ्गमविक्रमे
।इति वान्ताः
(३.३.७९८) द्वौ विशौ वैश्यमनुजौ द्वौ चाराभिमरौ स्पशौ
(३.३.७९९) द्वौ राशी पुञ्जमेषाऽऽद्यौ द्वौ वंशौ कुलमस्करौ
(३.३.८००) रहः प्रकाशौ वीकाशौ निर्वेशो भृतिभोगयोः
(३.३.८०१) कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु
(३.३.८०२) पदे लक्ष्ये निमित्तेऽपदेशः स्यात्कुशमप्सु च
(३.३.८०३) दशाऽवस्थाऽनेकविधाऽप्याशा तृष्णाऽपि चाऽयता
(३.३.८०४) वशा स्त्री करिणी च स्यात् दृग्ज्ञाने ज्ञातरि त्रिषु
(३.३.८०५) स्यात्कर्कशः साहसिकः कठोराऽमसृणावपि
(३.३.८०६) प्रकाशोऽतिप्रसिद्धेऽपि शिशावज्ञे च बालिशः
(३.३.८०७) नाशः क्षये तिरोधाने जीवितेशः प्रिये यमे
(३.३.८०८) नृशंसखड्गौ निस्त्रिंशावंशुः सूर्येऽंशवः कराः
(३.३.८०९) आश्वाख्या शालिशीघ्रार्थे पाशो बन्धनशस्त्रयोः
।इति शान्ताः
(३.३.८१०) सुरमत्स्यावनिमिषौ पुरुषावात्ममानवौ
(३.३.८११) काकमत्स्यात्खगौ ध्वाङ्क्षौ कक्षौ च तृणवीरुधौ
(३.३.८१२) अभीपुः प्रग्रहे रश्मौ प्रैषः प्रेषणमर्दने
(३.३.८१३) पक्षः सहायेऽप्युष्णीषः शिरोवेष्टकिरीटयोः
(३.३.८१४) शुक्रले मूषिके श्रेष्ठे सुकृते वृषभे वृषः
(३.३.८१५) कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः
(३.३.८१६) द्यूतेऽक्षे शारिफलकेऽप्याकर्षोऽथाऽक्षमिन्द्रिये
(३.३.८१७) ना द्यूताङ्गे कर्षचक्रे व्यवहारे कलिद्रुमे
(३.३.८१८) कर्षूर्वार्त्ता करीषाऽग्निः कर्षः कुल्याऽभिधायिनी
(३.३.८१९) पुम्भावे तत्क्रियायां च पौरुषं विषमप्सु च
(३.३.८२०) उपादानेऽप्यामिषं स्यादपराधेऽपि किल्बिषम्
(३.३.८२१) स्याद्वृष्टौ लोकधात्वंशे वत्सरे वर्षमस्त्रियाम्
(३.३.८२२) प्रेक्षा नृत्तेक्षणं प्रज्ञा भिक्षा सेवाऽर्थना भृतिः
(३.३.८२३) त्विट् शोभाऽपि त्रिषु परे न्यक्षं कार्त्स्न्यनिकृष्टयोः
(३.३.८२४) प्रत्यक्षेऽधिकृतेऽध्यक्षो रूक्षस्त्वप्रेम्ण्यचिक्कणे

(३.३.८२५) व्याजसंख्याशरव्येषु लक्षं घोषौ रवव्रजौ
(३.३.८२६) कपिशीर्षं भित्तिशृङ्गेऽनुतर्षश् चषकः सुरा
(३.३.८२७) दोषो वातादिके दोषा रात्रौ दक्षोऽपि कुक्कुटे
(३.३.८२८) शुण्डाग्रभागे गण्डूषो द्वयोश्च मुखपूरणे
।इति षान्ताः
(३.३.८२९) रविश्वेतच्छदौ हंसौ सूर्यवह्नी विभावसू
(३.३.८३०) वत्सौ तर्णकवर्षौ द्वौ सारङ्गाश्च दिवौकसः
(३.३.८३१) शृङ्गाराऽऽदौ विषे वीर्ये गुणे रागे द्रवे रसः
(३.३.८३२) पुंस्युत्तंसावतंसौ द्वौ कर्णपूरेऽपि शेखरे
(३.३.८३३) देवभेदेऽनले रश्मौ वसू रत्ने धने वसु
(३.३.८३४) विष्णौ च वेधाः स्त्री त्वाशीर्हिताऽऽशंसाऽहिदंष्ट्रयोः
(३.३.८३५) लालसे प्रार्थनौत्सुक्ये हिंसा चौर्याऽऽदिकर्म च
(३.३.८३६) प्रसूरश्वाऽपि भूद्यावौ रोदस्यौ रोदसी च ते
(३.३.८३७) ज्वालाभासौ न पुंस्यर्चिर्ज्योतिर्भद्योतदृष्टिषु
(३.३.८३८) पापाऽपराधयोरागः खगबाल्याऽऽदिनोर्वयः
(३.३.८३९) तेजः पुरीषयोर्वर्चो महश्चोत्सवतेजसोः
(३.३.८४०) रजो गुणे च स्त्रीपुष्पे राहौ ध्वान्ते गुणे तमः
(३.३.८४१) छन्दः पद्येऽभिलाषे च तपः कृच्छ्राऽऽदिकर्म च
(३.३.८४२) सहो बलं सहा मार्गो नभः खं श्रावणो नभाः
(३.३.८४३) ओकः सद्माऽऽश्रयश्चौकाः पयः क्षीरं पयोऽंबु च
(३.३.८४४) ओजो दीप्तौ बले स्रोत इन्द्रिये निम्नगारये
(३.३.८४५) तेजः प्रभावे दीप्तौ च बले शुक्रेऽप्यतस्त्रिषु
(३.३.८४६) विद्वान् विदंश्च बीभत्सो हिंस्रोऽप्यतिशयेत्वमी
(३.३.८४७) वृद्धप्रशंसयोर्ज्यायान् कनीयांस्तु युवाऽल्पयोः
(३.३.८४८) वरीयांस्तूरुवरयोः साधीयान् साधुबाढयोः
।इति सान्ताः
(३.३.८४९) दलेऽपि बर्हं निर्बन्धोपरागाऽर्काऽऽदयो ग्रहाः
(३.३.८५०) द्वार्यापीडे क्वाथरसे निर्यूहो नागदन्तके
(३.३.८५१) तुलासूत्रेऽश्वाऽऽदिरश्मौ प्रग्राहः प्रग्रहोऽपि च
(३.३.८५२) पत्नीपरिजनाऽऽदानमूलशापाः परिग्रहाः
(३.३.८५३) दारेषु च गृहाः श्रोण्यामप्यारोहो वरस्त्रियाः
(३.३.८५४) व्यूहो वृन्देऽप्यहिर्वृत्रेऽप्यग्नीन्द्वर्कास्तमोपहाः
(३.३.८५५) परिच्छदे नृपार्हेऽर्थे परिबर्होऽव्ययाः परे
।इति हान्ताः
(३.३.८५६) आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे
(३.३.८५७) आप्रगृह्यस्स्मृतौ वाक्येऽप्यास्तु स्यात्कोपपीडयोः
(३.३.८५८) पापकुत्सेषदर्थे कु धिङ् निर्भर्त्सननिन्दयोः
(३.३.८५९) चाऽन्वाचयसमाहारेतरेतरसमुच्चये
(३.३.८६०) स्वस्त्याशीः क्षेमपुण्याऽऽदौ प्रकर्षे लङ्घनेऽप्यति
(३.३.८६१) स्वित्प्रश्ने च वितर्के च तु स्याद्भेदेऽवधारणे
(३.३.८६२) सकृत् सहैकवारे चाप्याराद्दूरसमीपयोः
(३.३.८६३) प्रतीच्यां चरमे पश्चादुताऽप्यर्थविकल्पयोः
(३.३.८६४) पुनस्सहाऽर्थयोः शश्वत् साक्षात्प्रत्यक्षतुल्ययोः
(३.३.८६५) खेदाऽनुकम्पासंतोषविस्मयाऽऽमन्त्रणे बत
(३.३.८६६) हन्त हर्षेऽऽनुकम्पायां वाक्याऽऽरम्भविषादयोः
(३.३.८६७) प्रति प्रतिनिधौ वीप्सालक्षणाऽऽदौ प्रयोगतः
(३.३.८६८) इति हेतुप्रकरणप्रकर्षाऽऽदिसमाप्तिषु
(३.३.८६९) प्राच्यां पुरस्तात्प्रथमे पुराऽर्थेऽग्रत इत्यपि
(३.३.८७०) यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे
(३.३.८७१) मङ्गलाऽनन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ
(३.३.८७२) वृथा निरर्थकाऽविध्योर् नानाऽनेकोभयाऽर्थयोः
(३.३.८७३) नु पृच्छायां विकल्पे च पश्चात्सादृश्ययोरनु
(३.३.८७४) प्रश्नाऽवधारणाऽनुज्ञाऽनुनयाऽऽमन्त्रणे ननु
(३.३.८७५) गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि
(३.३.८७६) उपमायां विकल्पे वा सामि त्वर्धे जुगुप्सिते
(३.३.८७७) अमा सह समीपे च कं वारिणि च मूर्धनि
(३.३.८७८) इवेत्थमर्थयोरेवं नूनं तर्केऽर्थनिश्चये
(३.३.८७९) तूष्णीमर्थे सुखे जोषं किं पृच्छायां जुगुप्सने
(३.३.८८०) नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने
(३.३.८८१) अलं भूषणपर्याप्तिशक्तिवारणवाचकम्
(३.३.८८२) हुं वितर्के परिप्रश्ने समयाऽन्तिकमध्ययोः
(३.३.८८३) पुनरप्रथमे भेदे निर् निश्चयनिषेधयोः
(३.३.८८४) स्यात्प्रबन्धे चिराऽतीते निकटाऽऽगामिके पुरा
(३.३.८८५) ऊरर्यूरी चोररी च विस्तारेऽङ्गीकृतौ त्रयम्
(३.३.८८६) स्वर्गे परे च लोके स्वर् वार्तासंभाव्ययोः किल
(३.३.८८७) निषेधवाक्याऽलङ्कारजिज्ञासाऽनुनये खलु
(३.३.८८८) समीपोभयतश्शीघ्रसाकल्याऽभिमुखेऽभितः
(३.३.८८९) नामप्राकाश्ययोः प्रदुर् मिथोऽन्योन्यं रहस्यपि
(३.३.८९०) तिरोऽन्तर्धौ तिर्यगर्थे हा विषादशुगर्तिषु
(३.३.८९१) अहहेत्यद्भुते खेदे हि हेतावधारणे
।इति नानाऽर्थवर्गः ३, अत्र मूलश्लोकाः २५६॥ क्षे श्लो।२४ ॥

अव्ययवर्गः।

(३.४.८९२) चिराय चिररात्राय चिरस्याऽऽद्याश्चिराऽर्थकाः
(३.४.८९३) मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत् समाः
(३.४.८९४) स्राग् झटित्यञ्जसाऽह्नाय द्राङ् मङ्क्षु सपदि द्रुते
(३.४.८९५) बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे
(३.४.८९६) पृथग् विनाऽन्तरेणर्ते हिरुङ् नाना च वर्जने
(३.४.८९७) यत् तद् यतस् ततो हेतावसाकल्ये तु चिच् चन
(३.४.८९८) कदाचिज्जातु सार्धं तु साकं सत्रा समं सह
(३.४.८९९) आनुकूल्याऽर्थकं प्राध्वं व्यर्थके तु वृथा मुधा
(३.४.९००) आहो उताहो किमुत विकल्पे किं किमूत च
(३.४.९०१) तु हि च स्म ह वै पादपूरणे पूजने स्वति
(३.४.९०२) दिवाऽह्नीत्यथ दोषा च नक्तं च रजनाविति
(३.४.९०३) तिर्यगर्थे साचि तिरोऽप्यथ संबोधनाऽर्थकाः
(३.४.९०४) स्युः प्याट् पाडङ्ग हे है भोः समया निकषा हिरुक्

(३.४.९०५) अतर्किते तु सहसा स्यात् पुरः पुरतोऽग्रतः
(३.४.९०६) स्वाहा देवहविर्दाने श्रौषट् वौषट् वषट् स्वधा
(३.४.९०७) किञ्चिदीषन् मनागल्पे प्रेत्याऽमुत्र भवाऽन्तरे
(३.४.९०८) व वा यथा तथैवैवं साम्येऽहो हीति विस्मये
(३.४.९०९) मौने तु तूष्णीं तूष्णीकां सद्यः सपदि तत्क्षणे
(३.४.९१०) दिष्ट्या समुपजोषं चेत्यानन्देऽथाऽन्तरेऽन्तरा
(३.४.९११) अन्तरेण च मध्ये स्युः प्रसह्य तु हठार्थकम्
(३.४.९१२) युक्ते द्वे सांप्रतं स्थानेऽभीक्ष्णं शश्वदनारते
(३.४.९१३) अभावे नह्य नो नाऽपि मा स्म माऽलं च वारणे
(३.४.९१४) पक्षाऽन्तरे चेद्यदि च तत्त्वे त्वद्धाऽञ्जसा द्वयम्
(३.४.९१५) प्राकाश्ये प्रादुराविः स्यादोमेवं परमं मते
(३.४.९१६) समन्ततस्तु परितः सर्वतो विष्वगित्यपि
(३.४.९१७) अकामाऽनुमतौ काममसूयोपगमेस्तु च
(३.४.९१८) ननु च स्याद्विरोधोक्तौ कच्चित् कामप्रवेदने
(३.४.९१९) निषमं दुष्षमं गर्ह्ये यथास्वं तु यथायथम्
(३.४.९२०) मृषा मिथ्या च वितथे यथार्थं तु यथातथम्
(३.४.९२१) स्युरेवं तु पुनर्वै वेत्यवधारणवाचकाः
(३.४.९२२) प्रागतीताऽर्थकं नूनमवश्यं निश्चये द्वयम्
(३.४.९२३) संवद् वर्षेऽवरे त्वर्वागामेवं स्वयमात्मना
(३.४.९२४) अल्पे नीचैर्महत्युच्चैः प्रायो भूम्न्यद्रुते शनैः
(३.४.९२५) सना नित्ये बहिर्बाह्ये स्माऽतीतेऽस्तमदर्शने
(३.४.९२६) अस्ति सत्वे रुषोक्तावु ऊं प्रश्नेऽनुनये त्वयि
(३.४.९२७) हुं तर्के स्यादुषा रात्रेरवसानेनमो नतौ
(३.४.९२८) पुनरर्थेऽङ्ग निन्दायां दुष्ठु सुष्ठु प्रशंसने
(३.४.९२९) सायं साये प्रगे प्रातः प्रभाते निकषाऽन्तिके
(३.४.९३०) अमाऽनुगुण्ये स्मरणे हुं फड् विघ्ननिराकृतौ
(३.४.९३१) अङ्गीकृतौ स्यादर्थे हूं हीनसंबोधते त्वरे
(३.४.९३२) परुत् परार्थैषमोऽब्दे पूर्वे पूर्वतरे यति
(३.४.९३३) अद्यऽत्राऽह्नयथ पूर्वेऽह्नीत्यादौ पूर्वोत्तराऽपरात्
(३.४.९३४) तथाऽधराऽन्याऽन्यतरेतरात्पूर्वेद्युराऽऽदयः
(३.४.९३५) उभयद्युश्चोभयेद्युः परेत्वह्नि परेद्यवि
(३.४.९३६) ह्यो गतेऽनागतेऽह्नि श्वः परश्वस्तु परेऽहनि
(३.४.९३७) तदा तदानीं युगपदेकदा सर्वदा सदा
(३.४.९३८) एतर्हि संप्रतीऽदानीमधुना साम्प्रतं तथा
(३.४.९३९) दिग्देशकाले पूर्वाऽऽदौ प्रागुदक्प्रत्यगाऽऽदयः

लिङ्गाऽऽदिसंग्रहवर्गः।

। अथ लिङ्गाऽऽदिसंग्रहवर्गः ५

(३.५.९४०) सलिङ्गशास्त्रैः सन्नाऽऽदि कृत् तद्धित समासजैः
(३.५.९४१) अनुक्तैः संग्रहे लिङ्गं संकीर्णवदिहोन्नयेत्
(३.५.९४२) लिङ्गशेषविधिर् व्यापी विशेषैर् यद्यबाधितः
(३.५.९४३) स्त्रियामीदूद्विरामैकाऽच् सयोनिप्राणिनाम च
(३.५.९४४) नाम विद्युन्निशावल्लीवीणादिग्भूनदीह्रियाम्
(३.५.९४५) अदन्तैर् द्विगुरेकाऽर्थो न स पात्रयुगाऽऽदिभिः
(३.५.९४६) तल्वृन्दे येनिकत्यत्रा वैरमैथुनिकाऽऽदिवुन्
(३.५.९४७) स्त्रीभावाऽऽदावनि क्तिण् ण्वुल् णच् ण्वुच् क्यब् युजिञ्ङ् नि श
(३.५.९४८) उणाऽऽदिषु निरूरीश्च ङ्याबूङन्तं चलं स्थिरम्
(३.५.९४९) तत्क्रीडायां प्रहरणं चेन् मौष्टा पाल्लवा ण दिक्
(३.५.९५०) घञो ञः सा क्रियाऽस्यां चेद् दाण्डपाता हि फाल्गुनी
(३.५.९५१) श्यैनम्पाता च मृगया तैलम्पाता स्वधेति दिक्
(३.५.९५२) स्त्री स्यात्काचिन् मृणाल्याऽऽदिर् विवक्षाऽपचये यदि
(३.५.९५३) लङ्का शेफालिका टीका धातकीपञ्चिकाऽऽढकी
(३.५.९५४) सिध्रका सारिका हिक्का प्राचिकोल्का पिपीलिका
(३.५.९५५) तिन्दुकी कणिका भङ्गिः सुरङ्गासूचिमाढयः
(३.५.९५६) पिच्छा वितण्डा काकिण्यश्चूर्णिः शाणी द्रुणी दरत्
(३.५.९५७) सातिः कन्था तथाऽऽसन्दी नाभी राजसभाऽपि च
(३.५.९५८) झल्लरी चर्चरी पारी होरा लट्वा च सिध्मला
(३.५.९५९) लाक्षा लिक्षा च गण्डूषा गृध्रसी चमसी मसी

। इति स्त्रीलिङ्ग संग्रहः

(३.५.९६०) पुंस्त्वे सभेदाऽनुचराः सपर्यायाः सुराऽसुराः
(३.५.९६१) स्वर्गयागाऽद्रिमेघाऽब्धि द्रु कालाऽसिशराऽरयः
(३.५.९६२) करगण्डोष्ठदोर्दन्तकन्ठकेशनखस्तनाः
(३.५.९६३) अह्नाऽहाऽन्ताः क्ष्वेडभेदा रात्राऽन्ताः प्रागसंख्यकाः
(३.५.९६४) श्रीवेष्टाद्याश्च निर्यासा असन्नन्ता अबाधिताः
(३.५.९६५) कशेरुजतुवस्तूनि हित्वा तुरुविरामकाः
(३.५.९६६) कषणभमरोपान्ता यद्यदन्ता अमी अथ
(३.५.९६७) पथनयसटोपान्ता गोत्राख्याश्चरणाऽऽह्वयाः
(३.५.९६८) नाम्न्यकर्तरि भावे च घञ् जब् नङ् ण घाऽथुचः
(३.५.९६९) ल्युः कर्तरीमनिच् भावे को घोः किः प्राऽऽदितोन्यतः
(३.५.९७०) द्वन्द्वेऽश्ववडवावश्ववडवा न समाहृते
(३.५.९७१) कान्तः सूर्येन्दुपर्यायपूर्वोऽयः पूर्वको पि च
(३.५.९७२) वटकश्चाऽनुवाकश्च रल्लकश्च कुडङ्गकः
(३.५.९७३) पुङ्खो न्यूङ्खः समुद्रश्च विटपट्टधटाः खटाः
(३.५.९७४) कोट्टारघट्टहट्टाश्च पिण्डगोण्डपिचण्डवत्
(३.५.९७५) गडुः करण्डो लगुडो करण्डश्च किणो घुणः
(३.५.९७६) दृतिसीमन्तहरितो रोमन्थोद्गीथबुद्बुदाः
(३.५.९७७) कासमर्दोऽर्बुदः कुन्दः फेनस्तूपौ सयूपकौ
(३.५.९७८) आतपः क्षत्रिये नाभिः कुणपक्षुरकेदराः
(३.५.९७९) पूरक्षुरप्रचुक्राश्च गोलहिङ्गुलपुद्गलाः
(३.५.९८०) वेतालभल्लमल्लाश्च पुराडाशोऽपि पट्टिशः
(३.५.९८१) कुल्माषो रभसश्चैव सकटाहः पतद्ग्रहः

। इति पुंलिङ्गशेषसंग्रहः

(३.५.९८२) द्विहीनेऽन्यच्च खाऽरण्यपर्णश्वभ्रहिमोदकम्
(३.५.९८३) शीतोष्णमांसरुधिरमुखाऽक्षिद्रविणं बलम्
(३.५.९८४) फलहेमशुल्बलोहसुखदुह्खशुभाऽशुभम्
(३.५.९८५) जलपुष्पाणि लवणं व्यञ्जनान्यनुलेपनम्

(३.५.९८६) कोट्याः शताऽऽदिसंख्याऽन्या वा लक्षा नियुतं च तत्
(३.५.९८७) द्वयष्कमसिसुसन्नन्तं यदनाऽन्तमकर्तरि
(३.५.९८८) त्रान्तं सलोपधं शिष्टं रात्रं प्राक्संख्ययाऽन्वितम्
(३.५.९८९) पात्राऽऽद्यदन्तैरेकाऽर्थो द्विगुर्लक्ष्याऽनुसारतः
(३.५.९९०) द्वन्द्वैक्त्वाऽऽव्ययीभावौ पथः संख्याऽव्ययात्परः
(३.५.९९१) शद्याश्छाया बहूनां चेद्विच्छायं संहतौ सभा
(३.५.९९२) शालाऽर्थाऽपि परा राजाऽमनुष्याऽर्थादराजकात्
(३.५.९९३) दासीसभं नृपसभं रक्षस्सभमिमा दिशः
(३.५.९९४) उपज्ञोपक्रमाऽन्तश्च तदाऽऽदित्वप्रकाशने
(३.५.९९५) कोपज्ञकोपक्रमाऽऽदि कन्थोशीनरनामसु
(३.५.९९६) भावे न णकचिङ्वयोऽन्ये समूहे भावकर्मणोः
(३.५.९९७) अदन्तप्रत्ययाः पुण्यसुदिनाभ्यां त्वहः परः
(३.५.९९८) क्रियाऽव्ययानां भेदकान्येकत्वेऽप्युक्थतोटके
(३.५.९९९) चोचं पिच्छं गृहस्थूणं तिरीटं मर्म योजनम्
(३.५.१०००) राजसूयं वाजपेयं गद्यपद्ये कृतौ कवेः
(३.५.१००१) माणिक्यभाष्यसिन्दूरचीरचीवरपिञ्जरम्
(३.५.१००२) लोकायतं हरितालं विदलस्थालबाह्लिकम्
।इति नपुंसकशेषसंग्रहः
(३.५.१००३) पुन्नपुंसकयोः शेषोऽर्धर्चपिण्याककण्टकाः
(३.५.१००४) मोदकस्तण्डकष्टङ्कः शाटकः कर्पटोऽर्बुदः
(३.५.१००५) पातकोद्योगचरकतमालामलका नडः
(३.५.१००६) कुष्ठं मुण्डं शीधु बुस्तं क्ष्वेडितं क्षेमकुट्टिमम्
(३.५.१००७) संगमं शतमानाऽर्मशम्बलाऽव्ययताण्डवम्
(३.५.१००८) कवियं कन्दकार्पासं पारावारं युगन्धरम्
(३.५.१००९) यूपं प्रग्रीवपात्रीवे यूषं चमसचिक्कसौ
(३.५.१०१०) अर्धर्चाऽऽदौ घृताऽऽदीनां पुंस्त्वाऽऽद्यं वैदिकं ध्रुवम्
(३.५.१०११) तन् नोक्तमिह लोकेऽपि तच् चेदस्त्यस्तु शेषवत्
।इति पुन्नपुंसकशेषसंग्रहः
(३.५.१०१२) स्त्रीपुंसयोरपत्याऽन्ता द्विचतुष्षट्पदोरगाः
(३.५.१०१३) जातिभेदाः पुमाख्याश्च स्त्रीयोगैः सह मल्लकः
(३.५.१०१४) ऊर्मिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः
(३.५.१०१५) मूषा सृपाटी कर्कन्धूर्यष्टिः शाटी कटी कुटी
।इति स्त्रीपुंसशेषसंग्रहः
(३.५.१०१६) स्त्रीनपुंसकयोर्भावक्रिययोः व्यञ् क्वचिच्च वुञ्
(३.५.१०१७) औचित्यमौचिती मैत्री मैत्र्यं वुञ् प्रागुदाहृतः
(३.५.१०१८) षष्ठ्यन्तप्राक्पदाः सेनाछायाशालासुरानिशाः
(३.५.१०१९) स्याद्वा नृसेनं श्वनिशं गोशालमितरे च दिक्
(३.५.१०२०) आबन्नन्तोत्तरपदो द्विगुश्चाऽपुंसि नश्च लुप्
(३.५.१०२१) त्रिखट्वं च त्रिखट्वी च त्रितक्षं च त्रितक्ष्यपि
।इति स्त्रीनपुंसकशेषसंग्रहः
(३.५.१०२२) त्रिषु पात्री पुटी वाटी पेटी कुवलदाडिमौ
(३.५.१०२३) इति त्रिलिङ्गशेषसंग्रहः
(३.५.१०२४) परं लिङ्गं स्वप्रधाने द्वन्द्वे तत्पुरुषेऽपि तत्
(३.५.१०२५) अर्थाऽन्ताः प्राद्यलम्प्राप्ताऽऽपन्नपूर्वाः परोपगाः
(३.५.१०२६) तद्धिताऽर्थो द्विगुः संख्यासर्वनामतदन्तकाः
(३.५.१०२७) बहुव्रीहिरदिङ्नाम्नामुन्नेयं तदुदाहृतम्
(३.५.१०२८) गुणद्रव्यक्रियायोगोपाधयः परगामिनः
(३.५.१०२९) कृतहृकर्तर्यसंज्ञायां कृत्याः कर्तरि कर्मणि
(३.५.१०३०) अणाद्यन्तास्तेन रक्ताद्यर्थे नानाऽर्थभेदकाः
(३.५.१०३१) षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङ्व्ययम्
(३.५.१०३२) परं विरोधे शेषं तु ज्ञेयं शिष्टप्रयोगतः
इति लिङ्गाऽदिसंग्रहवर्गः: ५, अत्र मूलश्लोकाः ४६
इत्यमरसिंहकृतौ नामलिङ्गाऽनुशासने
सामान्यकाण्डस्तृतीयः साऽङ्ग एव समर्थितः
इति तृतीयः सामान्यकाण्डः समाप्तः
इत्यमरसिंहकृतं नामलिङ्गाऽनुशासनम्
काण्डत्रयाऽऽत्मकं साङ्गोपाङ्गं संपूर्णतामगात् ।

अत्र मूलश्लोकाः: ४८०, क्षे। श्लोकाः:२५ सर्वे च मिलित्वा:५१३

अमरकोशस्थश्लोकानां कोष्टकम्

प्र. काण्डे मू. श्लो. २८१, क्षे. श्लो. १८, सर्वे च मिलित्वा २९९
द्वि. काण्डे मू. श्लो. ७३५, क्षे. श्लो. १४, सर्वे च मिलित्वा ७५०
त्रि. काण्डे मू. श्लो. ४८०, क्षे. श्लो. २५, सर्वे च मिलित्वा ५१३
एवं सर्वेषां काण्डानां योगः मू. श्लो. १४९७, क्षे.श्लो. ५८, सर्वे च मिलित्वा १५६३

Please send corrections to sanskrit@cheerful.com
Last updated July 1, 2001